# bRihajjAtaka by varAhamihIra

# वराहमिहीरस्य बृहज्जातक

## Document Information

Text title : brihajjAtakam

File name : brihajjAtakam.itx

Category : jyotisha, sociology_astrology, varAhamihira

Location : doc_z_misc_sociology_astrology

Author : Varahamihira

Transliterated by : Mizue Sugita December 12, 1994 Radu Canahai clradu at yahoo.com

Proofread by : Radu Canahai clradu at yahoo.com

Latest update : December 12, 1994, August 02, 2002

Send corrections to : sanskrit@cheerful.com



November 22, 2022

*sanskritdocuments.org*

# वराहमिहीरस्य बृहज्जातक

प्रथमोऽध्यायः

राशि प्रभेद्

मूर्तित्वे परिकल्पितः शश भृतो वर्त्मापुनर्जन्मनामात्मेत्यात्म
विदां क्रतुश्च यजतां भर्तामर ज्योतिषाम् ।
लोकानां प्रलयोद्भवस्थिति विभुश्चानेकधायः श्रुतौ वाचं नः
सद्दात्वनेक किरणस्त्रैलोक्यदीपो रविः ॥ १॥

भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये
शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि ।
होरातन्त्र महार्णव प्रतरणे भग्नोद्यमानाम् अहं स्वल्पं
वृत्त विचित्रम् अर्थ बहुलं शास्त्र प्लवं प्रारभे ॥ २॥

होरेत्यहो रात्र विकल्पम् एके वाञ्छन्ति पूर्वापर वर्ण लोपात् ।
कर्माजितं पूर्व भवे सद् आदि यत् तस्य पङ्क्तिं समभिव्यनक्ति ॥ ३॥

कालाङ्गानि वराङ्गमाननम् उरो हृत् क्रोड वासो भृतो
बस्तिर्व्यञ्जनम् ऊरु जानु युगुले जङ्घे ततोऽङ्घ्रि द्वयम् ।
मेषाश्वि प्रथमा नवऋक्ष चरणाश्चक्र स्थिताराशयो
राशि क्षेत्र गृहऋक्ष भानि भवनं चैकार्थ सम्प्रत्ययाः ॥ ४॥

मत्स्यौ घटी नृ मिथुनं स गदं स वीणं चापी नरोऽश्व जघनो मकरो मृगास्यः ।
तौली स सस्यदहना प्लवगा च कन्या शेषाः स्वनाम सदृशाः स्वचराश्च सर्वे ॥ ५॥

क्षितिज सित ज्ञ चन्द्ररवि सौम्य सितावनिजाः सुर गुरु मन्द सौरि गुरवश्च गृहांशकपः ।
अज मृग तौलि चन्द्र भवनादि नवांश विधिर्भवन समांशकाधिपतयः स्व गृहात् क्रमशः ॥ ६॥

कुजरविज गुरु ज्ञ शुक्र भागाः पवन समीरण कौर्पि जूक लेयाः ।

अयुजि युजि तु भे विपर्ययस्थः शसि भवनालि झषान्तम् ऋक्ष संधिः ॥ ७॥

क्रिय तावुरि जितुम कुलीर लेय पाथोन जूक कौर्प्याख्याः ।
तौक्षिकाकोकेरो हृद् रोगश्चान्त्य भं चेत्थम् ॥ ८॥

द्रेष्काण होरा नव भाग संज्ञास्त्रिंशांशकद्वादश संज्ञिताश्च ।
क्षेत्रं च यद्यस्य स तस्य वर्गो होरेति लग्नं भवनस्य चार्धम् ॥ ९॥

गोऽजाश्वि कर्कि मिथुनाः स मृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्तैव ।
शीर्षोदयादिन बलाश्च भवन्ति शेषा लग्नं समेत्युभयतः पृथुरोम युग्मम् ॥ १०॥

क्रूरः सौम्यः पुरुष वनिते ते चराग द्वि देहाः प्रागादीशाः क्रिय वृष नृयुक् कर्कटाः स त्रिकोणाः ।
मार्तण्डेन्द्वोरयुजि समभे चन्द्र भान्वोश्च होरे द्रेष्काणाः स्युः स्व भवन सुत त्रित्रिकोणाधिपानाम् ॥ ११॥

के चित् तु होरां प्रथमां भपस्य वाञ्छन्ति लाभाधिपतेर्द्वितीयाम् ।
द्रेष्काण संज्ञाम् अपि वर्णयन्ति स्वद्वादशैकादशराशिपानाम् ॥ १२॥

अज वृषभ मृगाङ्गना कुलीरा झष वणिजा च दिवाकरादि तुङ्गाः ।
दश शिखि मनु युक् तिथीन्द्रियांशैस्त्रि नवक विंशतिभिश्च ते अस्त नीचाः ॥ १३॥

वर्गोत्तमाश्चरगृहादिषु पूर्व मध्य पर्यन्ततः शुभ फला नव भाग संज्ञाः ।
सिंहो वृष प्रथम षष्ठ हयाङ्ग तौलि कुम्भास्त्रिकोण भवनानि भवन्ति सूर्यात् ॥ १४॥

होरादयस्तनु कुटुम्ब सहोत्थ बन्धु पुत्रारि पत्नी मरणानि शुभास्पदायाः ।
रिःफाख्यम् इत्युपचयान्यरि कर्म लाभदुश्चिक्य संज्ञित गृहाणि न नित्यम् एके ॥ १५॥

कल्प स्व विक्रम गृह प्रतिभा क्षतानि चित्तोत्थरन्ध्र गुरु मान भव व्ययानि ।
लग्नाच्चतुर्थ निधने चतुरस्र संज्ञे द्यूनं च सप्तम गृहं दशमऋक्षम् आज्ञा ॥ १६॥

कण्टक केन्द्र चतुष्टय संज्ञाः सप्तम लग्न चतुर्थ ख भानाम् ।
तेषु यथाभिहितेषु बलाढ्याः कीट नरांबु चराः पशवश्च ॥ १७॥

केन्द्रात् परं पणफरं परतस्तु सर्व भापोक्लिमं हिबुकम् अम्बु सुखं च वेश्म ।
जामित्रम् अस्त भवनं त्रिकोणं मेषूरणं दशमम् अत्र च कर्म विद्यात् ॥ १८॥

होरा स्वामि गुरु ज्ञ वीक्षितयुता नान्यैश्च वीर्योत्कटा
केन्द्रस्था द्वि पदादयोऽह्नि निशि च प्राप्ते च संध्याद्वये ।

पूर्वार्धे विषयादयः कृत गुणा मानं प्रतीपं च
तद्दुश्चिक्यं सहजं तपश्च नवमं त्र्याद्यां त्रिकोणं च तत् ॥ १९॥

रक्तः श्वेतः शुक तनु निभः पाटलो धूम्र पांडुश्चित्रः
कृष्णः कनक सदृशः पिङ्गलः कर्बुरश्च ।
बभ्रुः स्वच्छः प्रथम भवनाद्येषु वर्णाः प्लवत्वं
स्वाम्याशाख्यं दिन करयुताद् भाद् द्वितीयं च वेशिः ॥ २०॥

---

द्वितीयोऽध्यायः

ग्रह भेद

कालात्मादिन कृन् मनस्तुहिनगुः सत्वं कुजो ज्ञो वचो
जीवो ज्ञान सुखे सितश्च मदनो दुःखं दिनेशात्मजः ।
राजानौ रवि शीतगू क्षित सुतो नेता कुमारो बुधः सूरिर्दानव
पूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥ १॥

हेलिः सूर्यश्चन्द्रमाः शीतरश्मिर्हेम्नो विज् ज्ञो बोधनश्चेन्दु पुत्रः ।
आरो वक्रः क्रूरदृक् चावनेयः कोणो मन्दः सूर्य पुत्रोऽसितश्च ॥ २॥

जीवोऽङ्गिराः सुर गुरुर्वचसां पतीज्यः शुक्रो भृगुर्भृगुसुतः सितास्फुजिच्च ।
राहुस्तमोऽगुरसुरश्च शिखीति केतुः पर्यायम् अन्यम् उपलभ्य वदेच्च लोकात् ॥ ३॥

रक्त श्यामो भास्करो गौरेन्दुर्नात्युच्चाङ्गो रक्त गौरश्च वक्रः ।
दूर्वा श्यामो ज्ञो गुरुर्गौर गात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः ॥ ४॥

वर्णास्ताम्र सितातिरक्त हरित व्यापीत चित्रासिता ।
बह्न्यम्ब्वग्निज केशवेन्द्र शचिकाः सूर्यादि नाथाः क्रमात् ।
प्रागाद्यारवि शुक्र लोहित तमः सौरेन्दु वित् सूरयः क्षीणेन्द्वर्क
मही सुतार्क तनयाः पापा बुधस्तैर्युतः ॥ ५॥

बुध सूर्य सुतौ नपुंसकाखौ शशि शुक्रौ युवती नराश्च शेषाः ।
शिखिभू ख पयो मरुद् गणानां वशिनो भूमि सुतादयः क्रमेण ॥ ६॥

विप्रादितः शुक्र गुरू कुजार्कौ शशी बुधश्चेत्यसितान्त्यजानाम् ।
चन्द्रार्क जीवा ज्ञ सितौ कुजार्की यथा क्रमं सत्वरजस्तमांसि ॥ ७॥

मधु पिङ्गलदृक् चतुरस्र तनुः पित्त प्रकृतिः सवितात्प कचः ।

तनु वृत्त तनुर्बहु वात कफः प्राज्ञश्च शशी मृदु वाक् शुभदृक् ॥ ८॥

क्रूरदृक् तरुण मूर्तिरुदारः पैत्तिकः सुचपलः कृश मध्यः ।
श्लिष्टवाक् सतत हास्यरुचिर्ज्ञः पित्त मारुत कफ प्रकृतिश्च ॥ ९॥

बृहत् तनुः पिङ्गल मूर्धजेक्षणो बृहस्पतिः श्रेष्ठ मतिः कफात्मकः ।
भृगुः सुखी कान्त वपुः सुलोचनः कफानिलात्मासित वक्र मूर्धजः ॥ १०॥

मन्दोऽलसः कपिलदृक् कृशदीर्घ गात्रः स्थूलद्विजः परुषरोम कचोऽनिलात्मा ।
स्नाय्वस्थ्यसृक् त्वग् अथ शुक्र वसे च मज्जा मन्दार्क चन्द्र बुध शुक्र सुरेज्य भौमाः ॥ ११॥

देवाम्ब्वग्नि विहार कोश शयन क्षित्युत्करेशाः क्रमात् ।
वस्त्रं स्थूलम् अभुक्तम् अग्निक हतं मध्यं दृढं स्फाटितम् ।
ताम्रं स्यान् मणि हेमयुक्ति रजतान्यर्काच्च मुक्तायसी ।
द्रेष्काणैः
शिशिरादयः शशु रुच ज्ञ ग्वादिषूद्यत्सु वा ॥ १२॥

त्रि दश त्रिकोण चतुरस्र सप्तमान्यवलोकयन्ति चरणाभिवृद्धितः ।
रविजामरेज्यरुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणे अधिकाः ॥ १३॥

अयन क्षण वासरऋतवो मासोऽर्धं च समाश्च भास्करात् ।
कटुक लवण तिक्त मिश्रिता मधुराम्लौ च कषायेत्यपि ॥ १४॥

जीवो जीव बुधौ सितेन्दु तनयौ व्यर्का विभौमाः क्रमाद् वीन्द्वर्का
विकुजेन्द्विनाश्च सुहृदः केषां चिद् एवं मतम् ।
सत्योक्ते सुहृदस्त्रिकोण भवनात् स्वात् स्वान्त्यधी धर्मपाः
स्वोच्चायुः सुखपाः स्वलक्षण विधेर्नान्यैर्विरोधाद् इति ॥ १५॥

शत्रू मन्द सितौ समश्च शशिजो मित्राणि शेषारवेस्-
तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूष्ण कराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ
मित्रे सूर्य सितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ १६॥

सूरः सौम्य सितावरी रवि सुतो मध्योऽपरे त्वन्यथा सौम्यार्की
सुहृदौ समौ कुज गुरू शुक्रस्य शेषावरी ।
शुक्रजौ सुहृदौ समः सुर गुरुः सौरस्य चान्ये अरयो ये
प्रोक्ताः स्व त्रिकोण भादिषु पुनस्ते अमी मया कीर्तिताः ॥ १७॥

अन्योन्यस्यधन व्ययाय सहज व्यापार बन्धु स्थितास्तत् काले
सुहृदः स्व तुङ्ग भवने अप्येके अरयस्त्वन्यथा ।
द्व्येकानुक्त भपान् सुहृत् समरिपून् संचिन्त्य नैसर्गिकांस्तत् काले च
पुनस्तु तान् अधिसुहृन् मित्रादिभिः कल्पयेत् ॥ १८॥

स्वोच्च सुहृत् स्व त्रिकोण नवांशैः स्थान बलं स्व गृहोपगतैश्च ।
दिक्षु बुधाङ्गिरसौ रवि भौमौ सूर्य सुतः सित शीत करौ च ॥ १९॥

उदग् अयने रवि शीत मयूखौ वक्र समागमगाः परिशेषाः ।
विपुल करा युधि चोत्तर संस्थाश्चेष्टित वीर्ययुता परिकल्प्याः ॥ २०॥

निशि शशि कुज सौराः सर्वदा ज्ञोऽह्नि चान्ये ।
बहुल सित गताः स्युः क्रूर सौम्याः क्रमेण ।
द्व्ययनदिवस होरा मासपैः काल वीर्यं शरु बु गु शु च साद्या वृद्धितो वीर्यवन्तः ॥
२१॥

---

तृतीयोऽध्यायः

वियोनिजन्म

क्रूर ग्रहैः सुबलिभिर्विबलैश्च सौम्यैः क्लीबे चतुष्टय गते तदवेक्षणाद् वा ।
चन्द्रोपग द्वि रस भाग स मानरूपं सत्वं वदेद् यदि भवेत् स वियोनि संज्ञः ॥ १॥

पापा बलिनः स्व भागगाः पारक्ये विबलाश्च शोभनाः ।
लग्नं च वियोनि संज्ञकं दृष्ट्वात्रापि वियोनिम् आदिशेत् ॥ २॥

क्रियः शिरो वक्र गले वृषोऽन्ये पादांशकं पृष्ठम् उरोऽथ पार्श्वे ।
कुक्षिस्त्वपानाङ्घ्राथ मेढ्र मुष्कौ स्फिक् पुच्छम् इत्याह चतुष्पदाङ्गे ॥ ३॥

लग्नांशकाद् ग्रहयोगेक्षणाद् वा वर्णान् वदेद् बलयुक्ता द्वि योनौ ।
दृष्ट्या स मानान् प्रवदेत् स्व संख्ययारेखां वदेत् स्मर संस्थैश्च पृष्ठे ॥ ४॥

खगे दृकाणे बलसंयुतेन वा ग्रहेणयुक्ते चरभांशकोदये ।
बुधांशके वा विहगाः स्थलांबुजाः शनैश्चरेन्द्वीक्षणयोग संभवाः ॥ ५॥

होरेन्दु सूरि रविभिर्विबलैस्तरुणां तोये स्थले तरु भवांश कृतः प्रभेदः ।
लग्नाद् ग्रहः स्थल जलर्क्ष पतिस्तु यावांस्तावन्तैव तरवः स्थल तोय जाताः ॥
६॥

अन्तः साराञ् जनयति रविर्दुर्भगान् सूर्य सूनुः क्षीरोपेतांस्तुहिन किरणः कण्टकाढ्यांश्च भौमः ।
वाग् ईश ज्ञौ स फल विफलान् पुष्प वृक्षांश्च शुक्रः
स्निग्धान् इन्दुः कटुक विटपान् भूमि पुत्रश्च भूयः ॥ ७॥

शुभो शुभऋक्षे रुचिरं कुभूमिजं करोति वृक्षं विपरीतम् अन्यथा
परांशके यावति विच्युतः स्वकाद् भवन्ति तुल्यास्तरवस्तथा विधाः ॥ ८॥

## चतुर्थोऽध्यायः

### निषेका

कुजेन्दु हेतुः प्रतिमासम् आर्तवं गते तु पीडऋक्षम् अनुष्णदिधितौ ।
अतोऽन्यथास्थे शुभ पुंग्रहेक्षिते नरेण संयोगम् उपैति कामिनी ॥ १॥

यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुन प्रयोगः ।
असद् ग्रहालोकित संयुते अस्ते सरोषेष्टैः स विलास हासः ॥ २॥

रवीन्दु शुक्रावनिजैः स्वभागगैर्गुरौ त्रिकोणोदय संस्थितेऽपि वा ।
भवत्यपत्यं हि विबीजिनाम् इमे करा हिमांशोर्विदृशाम् इवाफलाः ॥ ३॥

दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ गद प्रदा पुङ्गलयोषितोस्तदा ।
व्यय स्वगौ मृत्युकरौ युतौ तथा तदेकदृष्ट्या मरणाय कल्पितौ ॥ ४॥

दिवार्क शुक्रौ पितृ मातृ संज्ञितौ शनैश्चरेन्दू निशि तद्विपर्ययात् ।
पितृव्य मातृ स्वसृ संज्ञितौ च तावथौजयुग्मऋक्ष गतौ तयोः शुभौ ॥ ५॥

अभिलषद्भिरुदयऋक्षम् असद्भिर्मरणम् एति शुभदृष्टिम् अयाते ।
उदयराशि सहिते च यमे स्त्री विगलितोडु पति भू सुतदृष्टे ॥ ६॥

पापद्वय मध्य संस्थितौ लग्नेन्दू न च सौम्य वीक्षितौ ।
युगपत् पृथग् एव वा वदेन् नारी गर्भयुता विपद्यते ॥ ७॥

क्रूरे शशिनश्चतुर्थगे लग्नाद् वा निधनाश्रिते कुजे ।
बन्ध्वन्त्यगयोः क्षीणेन्दौ निधनाय पूर्ववत् ॥ ८॥

उदयास्तगयोः कुजार्कयोर्निधनं शस्त्र कृतं वदेत् तथा ।
मासाधिपतौ निपीडिते तत् काले स्त्रवणं समादिशेत् ॥ ९॥

शशाङ्क लग्नोपगतैः शुभ ग्रहैस्त्रिकोण जायार्थ सुखास्पद स्थितैः ।

तृतीय लाभऋक्ष गतैश्च पापकैः सुखी तु गर्भो रविणा निरीक्षितः ॥ १०॥

ओजऋक्षे पुरुषांशकेषु बलिभिर्लग्नार्क गुर्विन्दुभिः पुंजन्म
प्रवदेत् समांशक गतैर्युग्मेषु तैर्योषितः ।
गुर्वर्कौ विषमे नरं शशि सितौ वक्रश्च युग्मे स्त्रियम् ।
द्व्यङ्गस्थ
बुध वीक्षणाच्च यमलौ कुर्वन्ति पक्षे स्वके ॥ ११॥

विहाय लग्नं विषमऋक्ष संस्थः सौरोऽपि पुंजन्म करो विलग्नात् ।
प्रोक्त ग्रहाणाम् अवलोक्य वीर्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥ १२॥

अन्योन्यं यदि पश्यतः शशि रवी यद्यर्कि सौम्यावपि वक्रो वा
समगं दिनेशम् असमे चन्द्रोदयौ चेत् स्थितौ ।
युग्मौजऋक्ष गतावपीन्दु शशिजौ भूम्यात्मजेनेक्षितौ
पुम्भावे सित लग्न शीत किरणाः षट् क्लीबयोगाः स्मृताः ॥ १३॥

युग्मे चन्द्र सितौ तथौज भवने स्युर्ज्ञार जीवोदया
लग्नेन्दू नृ निरीक्षितौ च समगौ युग्मेषु वा प्राणिनः ।
कुर्युर्ते मिथुनं ग्रहोदय गतान् द्व्यङ्गांशकान् पश्यति स्वांशे
ज्ञे त्रितयं ज्ञगांशक वशाद् युग्मं त्वमिश्रैः समम् ॥ १४॥

धनुर्धरस्यान्त्यगते विलग्ने ग्रहैस्तदंशोपगतैर्बलिष्ठैः ।
ज्ञेनार्किणा वीर्ययुतेनदृष्टैः सन्ति प्रभूतापि कोश संस्थाः ॥ १५॥

कलल घनाङ्कुरास्थि चर्माङ्गज चेतनताः सित कुज जीव सूर्य चन्द्रार्कि बुधाः परतः
।
उदयप चन्द्र सूर्य नाथाः क्रमशो गदिता भवन्ति शुभाशुभं च मासाधिपतेः सदृशम्
॥ १६॥

त्रिकोणगे ज्ञे विबलैस्तथा परैर्मुखाङ्घ्रि हस्तैर्द्विगुणस्तदा भवेत् ।
अवाग् गवीन्दावशुभैर्भ संधिगैः शुभेक्षितश्चेत् कुरुते गिरं चिरात् ॥ १७॥

सौम्यऋक्षांशे रविजरुधिरौ चेत् स दन्तोऽत्र जातः कुब्जः
स्वऋक्षे शशिनि तनुगे मन्द माहेयदृष्टे ।
पङ्गुर्मीने यम शशि कुजैर्वीक्षिते लग्न संस्थे संधौ पापे
शशिनि च जडः स्यान् न चेत् सौम्यदृष्टः ॥ १८॥

सौर शशाङ्कदिवा करदृष्टे वामनको मकरान्त्य विलग्ने ।

धी नवमोदयगैश्च दृकाणैः पापयुतैरभुजाङ्घ्रि शिराः स्यात् ॥ १९॥

रवि शशि युते सिंहे लग्ने कुजार्कि निरीक्षिते नयनरहितः सौम्यासौम्यैः स बुद्बुद लोचनः ।
व्यय गृह गतश्चन्द्रो वामं हिनस्त्यपरं रविर्न शुभ
गदिता योगा याप्या भवन्ति शुभेक्षिताः ॥ २०॥

तत् कालम् इन्दु सहितो द्वि रसांशको यस्तत् तुल्यराशि सहिते पुरतः शशाङ्के ।
यावान् उदेति दिनरात्रि स मान भागस्तावद् गते दिन निशोः प्रवदन्ति जन्म ॥ २१॥

उदयति मृदु भांशे सप्तमस्थे च मन्दे यदि भवति निषेकः सूतिरब्द त्रयेण ।
शशिनि तु विधिरेष द्वादशे अब्दे प्रकुर्यान् निगदितम् इह चिन्त्यं सूति काले अपि युक्त्या ॥ २२॥

पंचमोऽध्याय

जन्मविधि

पितुर्जातः परोक्षस्य लग्नम् इन्दावपश्यति ।
विदेशस्थस्य चर भे मध्याद् भ्रष्टे दिवा करे ॥ १॥

उदयस्थेऽपि वा मन्दे कुजे वास्तं समागते
स्थिते वान्तः क्षपा नाथे शशाङ्क सुत शुक्रयोः ॥ २॥

शशाङ्के पाप लग्ने वा वृश्चिकेश त्रि भागगे ।
शुभैः स्वाय स्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा ॥ ३॥

चतुष्पाद् गते भानौ शेषैर्वीर्य समन्वितैः ।
द्वि तनुस्थैश्च यमलौ भवतः कोश वेष्टितौ ॥ ४॥

छागे सिंहे वृषे लग्ने तत्स्थे सौरे अथ वा कुजे ।
राश्यंश सदृशे गात्रे जायते नाल वेष्टितः ॥ ५॥

न लग्नम् इन्दुं च गुरुर्निरीक्षते न वा शशाङ्कं रविणा समागतम् ।
स पापकोऽर्केणयुतोऽथ वा शशी परेण जातं प्रवदन्ति निश्चयात् ॥ ६॥

क्रूरऋक्ष गतावशोभनौ सूर्याद् द्यून नवात्मज स्थितौ ।
बद्धस्तु पिता विदेशगः स्वे वा राशि वशाद् अथो पथि ॥ ७॥

पूर्णे शशिनि स्वराशिगे सौम्ये लग्न गते शुभे सुखे ।
लग्ने जलजे अस्तगे अपि वा चन्द्रो पोत गता प्रसूयते ॥ ८॥

आप्योदयम् आप्यगः शशी सम्पूर्णः समवेक्षते अथ वा ।
मेषूरण बन्धु लग्नगः स्यात् सूतिः सलिले न संशयः ॥ ९॥

उदयोडुपयोर्व्यय स्थिते गुप्त्यां पाप निरीक्षिते यमे ।
अलि कर्कि युते विलग्नगे सौरे शीत करेक्षिते वटे ॥ १०॥

मन्दे अब्ज गते विलग्नगे बुध सूर्येन्दु निरीक्षिते क्रमात् ।
क्रीडा भवने सुरालये सोखर भूमिषु च प्रसूयते ॥ ११॥

नृ लग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे ।
रविर्नरेन्द्रामरगो कुलेषु शिल्पालये ज्ञः प्रसवं करोति ॥ १२॥

राश्यंश स मान गोचरे मार्गे जन्म चरे स्थिरे गृहे ।
स्वऋक्षांश गते स्व मन्दिरे बलयोगात् फलम् अंशकऋक्षयोः ॥ १३॥

आरार्कजयोस्त्रिकोणगे चन्द्रे अस्ते च विसृज्यते अंबया ।
दृष्टे अमरराज मन्त्रिणा दीर्घायुः सुख भाक् च स स्मृतः ॥ १४॥

पापेक्षिते तुहिनगावुदये कुजे अस्ते त्यक्तो विनश्यति कुजार्कजयोस्तथाये ।
सौम्ये अपि पश्यति तथा विध हस्तम् एति सौम्येतरेषु पर हस्त गतोऽप्यनायुः ॥
१५॥

पितृमातृगृहेषु तद्बलात् तरु शालादिषु नीचगैः शुभः ।
यदि नैक गतैस्तु वीक्षितौ लग्नेन्दू विजने प्रसूयते ॥ १६॥

मन्दऋक्षांशे शशिनि हिबुके मन्ददृष्टे अब्जगे वा ।
तद् युक्ते वा तमसि शयने नीच संस्थैश्च भूमौ ।
यद् वद् राशिर्व्रजति हरिजं गर्भ मोक्षस्तु तद्वत् पापैश्चन्द्रात्
स्मर सुख गतैः क्लेशम् आहुर्जनन्याः ॥ १७॥

स्नेहः शशाङ्काद् उदयाच्च वर्तिर्दीपोऽर्कयुक्तऋक्ष वशाच्चराद्यः ।
द्वारं च तद्वास्तुनि केन्द्र संस्थैर्ज्ञेयं ग्रहैः वीर्य समन्वितैर्वा ॥ १८॥

जीर्णं संस्कृतम् अर्कजे क्षिति सुते दग्धं नवं शीतगौ काष्ठाढ्यं
न दृढं रवौ शशि सुते तन् नैक शिल्प्युद्भवम् रम्यम् ।
चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरं चक्रस्थैश्च

यथोपदेशरचनां सामन्त पूर्वां वदेत् ॥ १९॥

मेष कुलीर तुलालि गटैः प्रागुत्तरतो गुरु सौम्य गृहेषु ।
पश्चिमतश्च वृषेण निवासो दक्षिण भाग करौ मृग सिंहौ ॥ २०॥

प्राच्यादि गृहे क्रियादयो द्वौ द्वौ कोण गता द्वि मूर्तयः ।
शय्यास्वपि वास्तु वद् वदेत् पादैः षट् त्रि नवान्त्य संस्थितैः ॥ २१॥

चन्द्र लग्नान्तर गतैर्ग्रहैः स्युरुपसूतिकाः ।
बहिरन्तर चक्राद् अर्धे दृश्यादृ्श्ये अन्यथा परैः ॥ २२॥

लग्न नवांशप तुल्य तनुः स्याद् वीर्ययुत ग्रह तुल्य वपुर्वा ।
चन्द्र समेत नवांशप वर्णः कादि विलग्न विभक्त भ गात्रः ॥ २३॥

कं दृक् श्रोत्र नसा कपोल हनवो वक्रं च होरादयस्ते
कण्ठांसक बाहु पार्श्व हृदय क्रोडानि नाभिस्ततः ।
बस्तिः शिश्न गुदे ततश्च वृषणावूरू ततो जानुनी ।
जङ्घाङ्घ्रीत्युभयत्र वामम् उदितैर्द्रेष्काण भागैस्त्रिधा ॥ २४॥

तस्मिन् पापयुतं व्रणे शुभयुते दृष्टे च लक्ष्मादिशेत्
स्वर्क्षक्षांशे स्थिर संयुतेषु सहजः स्याद् अन्यथाङ्गतुकः ।
मन्देश्मानिलजोऽग्नि शास्त्र विषजो भौमे बुधे भू भवः सूर्ये काष्ठ
चतुष्पदेन हिमगौ शृङ्ग्ब्जजोऽन्यैः शुभम् ॥ २५॥

समनुपतिता यस्मिन् भागे त्रयः स बुधा ग्रहा भवति नियमात् तस्यावाप्तिः शुभेष्वशुभेषु वा ।
व्रण कृद् अशुभः षष्ठे देहे तनोर्भे समाश्रिते तिलकम्
अशकृद् दृष्टः सौम्यैर्युतश्च स लक्ष्मवान् ॥ २६॥

---

षष्ठोऽध्यायः

अरिष्ट

संध्यायां हिम दीधिति होरा पापैर्भान्त गतैर्निधनाय ।
रत्येकं शशि पाप समेतैः केन्द्रैर्वा स विनाशम् उपैते ॥ १॥

चक्रस्य पूर्वापर भागगेषु क्रूरेषु सौम्येषु च कीट लग्ने ।
क्षिप्रं विनाशं समुपैति जातः पपैर्विलग्नास्तमयाभितश्च ॥ २॥

पापावुदयास्त गतौ क्रूरेणयुतश्च शशी ।

दृष्टश्च शुभैर्न यदा मृत्युश्च भवेद् अचिरात् ॥ ३॥

क्षीणे हिमगौ व्ययगौ पापैरुदयाष्टमगैः ।
केन्द्रेषु शुभाश्च न चेत् क्षिप्रं निधनं प्रवदेत् ॥ ४॥

क्रूरेण संयुतः शशी स्मरान्त्य मृत्यु लग्नगः ।
कण्टकाद् बहिः शुभैरवीक्षितश्च मृत्युदः ॥ ५॥

शशिन्यरि विनाशगे निधनम् आशु पापेक्षिते शुभैरथ समाष्टकदलम् अतश्च मिश्रैः स्थितिः ।
असद्भिरवलोकिते बलिभिरत्र मासं शुभे कलत्र सहिते च पाप विजिते विलग्नाधिपे ॥ ६॥

लग्ने क्षीणे शशिनि निधनं रन्ध्र केन्द्रेषु पापैः
पापान्तस्थे निधन हिबुक द्यून संस्थे च चन्द्रे
एवं लग्ने भवति मदन च्छिद्र संस्थैश्च पापैर्मात्रा सार्द्धं
यदि न च शुभैर्वीक्षितः शक्ति भिन्द्धः ॥ ७॥

राश्यन्तगे सद्भिरवीक्ष्यमाणे चन्द्रे त्रिकोणोपगतैश्च पापैः ।
प्राणैः प्रयात्याशु शिशुर्वियोगम् अस्ते च पापैस्तुहिनांशु लग्ने ॥ ८॥

अशुभ सहिते ग्रस्ते चन्द्रे कुजे निधनाश्रिते जननि सुतयोर्मृत्युर्लग्ने रवौ तु स शस्त्रजः ।
उदयति रवौ शीतांशौ वा त्रिकोण विनाशगैर्निधनम् अशुभैर्वीर्योपेतैः शुभैर्न युतेक्षिते ॥ ९॥

असितरवि शशाङ्क भूमिजैर्व्यय नवमोदय नैधनाश्रितैः ।
भवति मरणम् आशु देहिनां यदि बलिना गुरुणा न वीक्षिताः ॥ १०॥

सुत मदन नवान्त्य लग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः ।
भृगुसुत शशिपुत्र देवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥ ११॥

योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनु गृहम् अथ वा ।
पापैर्दृष्टे बलवति मरणं वर्षस्यान्तः किल मुनि गदितम् ॥ १२॥

---

सप्तमोऽध्यायः

आयुर्दाय

मय यवन मणित्थ शक्ति पूर्वैर्दिवस करादिषु वत्सराः प्रदिष्टाः ।

नव तिथि विषयाश्वि भूतरुद्रदश सहिता दशभिः स्व तुङ्ग भेषु ॥ १॥

नीचे अतोऽर्धं ह्रसति हि ततश्चान्तरस्थे अनुपातो होरा त्वंश प्रतिमम् अपरे राशि तुल्यं वदन्ति ।
हित्वा वक्रं रिपु ग्रह गतैर्हीयते स्व त्रि भागः सूर्योच्छिन्नद्युतिषु
च दलं प्रोजिह्य शुक्रार्क पुत्रौ ॥ २॥

सर्वार्धं त्रि चरण पञ्च षष्ट भागाः क्षीयन्ते व्यय भवनाद् असत्सु वामम् ।
सत्स्वर्धं ह्रसति तथाइकराशिगानाम् एकांशं हरति बली तथाह सत्यः ॥ ३॥

सार्धोदितोदित नवांश हतात् समस्ताद् भागोऽष्टयुक्त शत संख्यम् उपैतो नाशम् ।
क्रूरे विलग्न सहिते विधिना त्वनेन सौम्येक्षिते दलम् अतः प्रलयं प्रयाति ॥ ४॥

समा षष्टिर्द्विघ्ना मनुज करिणां पञ्च च निशा हयानां
द्वात्रिंशत् खर करभयोः पञ्चक कृतिः ।
विरूपा साप्यायुर्वृष महिषयोर्द्वादश शुनां स्मृतं छागादीनां
दशक सहिताः षट् च परम ॥ ५॥

अनिमिष परमांशके विलग्ने शशि तनये गवि पञ्च वर्ग लिप्ते ।
भवति हि परमायुषः प्रमाणं यदि सकलः सहिताः स्व तुङ्ग भेषु ॥ ६॥

आयुर्दायं विष्णु गुप्तोऽपि चैवं देव स्वामी सिद्धसेनश्च चक्रे ।
दोषश्चैषां जायते अष्टावरिष्टं हित्वा नायुर्विंशतेः स्याद् अधस्तात् ॥ ७॥

यस्मिन् योगे पूर्णम् आयुः प्रदिष्टं तस्मिन् प्रोक्तं चक्र वर्तित्वम् अन्यैः
प्रत्यक्षोऽयं दोषः परोऽपि जीवत्यायुः पूर्णम् अर्थैर्विनापि ॥ ८॥

स्वमतेन किलाह जीव शर्मा ग्रहदायं परमायुसः स्वरांशम् ।
ग्रह भुक्त नवांशराशि तुल्यं बहु साम्यं समुपैति सत्य वाक्यम् ॥ ९॥

सत्योक्ते ग्रहम् इष्टं लिप्ती कृत्वा शतद्वयेनाप्तम् ।
मण्डल भाग विशुद्धे अब्दाः स्युः शेषात् तु मासाद्याः ॥ १०॥

स्व तुङ्ग वक्रोपगतैस्त्रिसंगुणं द्विरुत्तम स्वांशक भ त्रिभ्हागगैः ।
इयान् विशेषस्तु भदत्त भाषिते स मानम् अन्यत् प्रथमे अप्युदीरितम् ॥ ११॥

किं त्वत्र भांश प्रतिमं ददाति वीर्यान्वितराशि समं च होरा ।
क्रूरोदये च उपचयः स नात्र कार्यं च नाब्दैः प्रथमोपदिष्टैः ॥ १२॥

सत्योपदेशो वरम् अत्र किन्तु कुर्वन्त्ययोग्यं बहु वर्गणाभिः ।

आचार्यकत्वं च बहु घ्नतायाम् एकं तु यद् भूरि तदेव कार्यम् ॥ १३॥

गुरु शशि सहिते कुलीर लग्ने शशि तनये भृगुजे च केन्द्रयाते ।
भवरिपु सहजोपगैश्च शेषैरमितम् इहायुरनुक्रमाद् विना स्यात् ॥ १४॥

---

अष्टमोऽध्यायः

दशान्तर्दशा

उदयरवि शशाङ्क प्राणि केन्द्रादि संस्थाः ।
प्रथम वयसि मध्ये अन्त्ये च दद्युः फलानि ।
न हि न फल विपाकः केन्द्र संस्थाद्य भावे भवति हि फल पक्तिः पूर्वम् आपोक्लिमे अपि ॥ १॥

आयुः कृतं येन हि यत् तदेव कल्प्या दश सा प्रबलस्य पूर्वाम् ।
साम्ये बहूनां बहु वर्षदस्य तेषां च साम्ये प्रथमोदितस्य ॥ २॥

एकऋक्षगोऽर्धम् अपहृत्य ददाति तु स्वं त्र्यंशं त्रिकोण गृहगः स्मरगः स्वरांशम् ।
पादं फलस्य चतुरस्र गतः स होरस्त्वेवं परस्पर गताः परिपाचयन्ति ॥ ३॥

स्थानान्यथाइतानि स वर्णयित्वा सर्वाण्यधश्छेद विवर्जितानि ।
दशाब्द पिण्डे गुणका यथांशं छेदस्तदैक्येन दशाप्रभेदः ॥ ४॥

सम्यग् बलिनः स्व तुङ्ग भागे सम्पूर्णा बल वर्जितस्यरिक्ता ।
नीचांश गतस्य शत्रु भागे ज्ञेयानिष्ट फलादशा प्रसूतौ ॥ ५॥

भ्रष्टस्य तुङ्गाद् अवरोहि संज्ञा मध्या भवेत् सा सुहृद् उच्च भागे ।
अरोहिणी निम्न परिच्युतस्य नीचारि भांशेष्वधमा भवे सा ॥ ६॥

नीचारि भांशे समवस्थितस्य शस्ते गृहे गृहे मिश्र फला प्रदिष्टा ।
संज्ञानुरूपाणि फलान्यथैषां दशासु वक्ष्यामि यथोपयोगम् ॥ ७॥

उभये अधम मध्य पूजिताद्रेष्काणैश्चर भेषु च उत्क्रमात् ।
अशुभेष्ट समाः स्थिरे क्रमाद् धोरायाः परिकल्पितादशा ॥ ८॥

एकं द्वौ नव विंशतिर्धृति कृती पञ्चाशद् एषां
क्रमाचन्द्रारेन्दुज शुक्र जीवदिनक्रिद् दैवा करिणां समाः ।
स्वैः स्वैः पुष्ट फलानि सर्ग जनितैः पक्तिर्दशायाः क्रमाद् अन्ते
लग्नदशा शुभेति यवना नेच्छन्ति केचित् तथा ॥ ९॥

पाक स्वामिनि लग्नगे सुहृदि वा वर्गे अस्य सौम्ये अपि वा
प्रारब्धा शुभदादशा त्रिदश षड् लाभेषु वा पाकपे ।
मित्रोच्चोपचयस्त्रिकोण मदने पाकेश्वरस्य स्थितश्चन्द्रः
सत् फल बोधनानि कुरुते पापानि चातोऽन्यथा ॥ १०॥

प्रारब्धा हिमगौ दशा स्व गृहगे मानार्थ सौख्यावहा कौजे
दूषयति स्त्रियं बुध गृहे विद्या सुहृद् वित्तदा ।
दुर्गारण्य पथालये कृषि करी सिंहे सितर्क्षे अन्नदा कुस्त्रीदा
मृग कुम्भयोर्गुरु गृहे मानार्थ सौख्यावहा ॥ ११॥

सौर्यां स्वन् नखदन्त चर्म कनक क्रौर्याध्व भूपाहवैस्तक्ष्ण्यं
दैर्यम् अजस्रम् उद्यमरतिः ख्यातिः प्रतापोन्नतिः ।
भार्य पुत्रधनारि शस्त्र हुतभुग् भूपोद्भवा व्यापद स्त्यागी
पापरतिः स्व भृत्य कलहो हृत् क्रोड पीडामयाः ॥ १२॥

इन्दोः प्राप्यदशां फलानि लभते मन्त्रद्विजात्युद्भवनीक्षु क्षीर
विकार वस्त्र कुसुम क्रीडा तिलान्न श्रमैः ।
निद्रालस्य मृदु द्विजामररतिः स्त्री जन्म मेधाविता
कीर्त्यर्थोपचक्षयौ च बलिभिर्वैरं स्व पक्षेण च ॥ १३॥

भौमस्यारि विमर्द भूप सहज क्षित्याविकाजैर्धनं प्रद्वेषः
सुत मित्रदार सहजैर्विद्वद् गुरु द्वेष्टृता ।
तृष्णासृग् ज्वर पित्त भङ्ग जनितारोगाः पर स्त्री कृताः प्रीतिः
पापरतैरधर्म निरतिः पारुष्य तैक्ष्ण्यानि च ॥ १४॥

बौध्यां दौत्य सुहृद् गुरु द्विजधनं विद्वत् प्रशंसा
यशो युक्ति द्रव्य सुवर्ण वेसर मही सौभाग्य सौख्याप्तयः ।
हास्योपासन कौशलं मति चयो धर्म क्रिया सिद्धयः
पारुष्यं श्रम बन्ध मानस शुचः पीडा च धातु त्रयात् ॥ १५॥

जैव्यां मान गुणोदयो मति चयः कान्तिः प्रतापोन्नतिर्माहात्म्योद्यम
मन्त्र नीति नृ पति स्वाध्याय मन्त्रैर्धनम् ।
हेमाश्वात्मज कुञ्जराम्बर चयः प्रीतिश्च सद् भूमिपैः ।
सूक्ष्म्योह गहनाश्रमः श्रवणरुग् वैरं विधर्माश्रितैः ॥ १६॥

शौक्यां गीतरतिः प्रमोद सुरभि द्रव्यान्न पानाम्बर स्त्री रत्न
द्युति मन्मथोपकरण ज्ञानेष्ट मित्रागमाः ।

कौशल्यं क्रय विक्रये कृषि निधि प्राप्तिर्धनस्यागमो ।
वृन्दोर्वीश निषादधर्मरहितैर्वैरं शुचः स्नेहतः ॥ १७॥

सौरीं प्राप्य खरोष्ट्र पक्षि महिषी वृद्धाङ्गनावाप्तयः ।
श्रेणी ग्राम पुरधि कार जनिता पूजा कुधान्यागमः ।
श्लेष्मेर्ष्यानिल कोप मोह मलिन व्यापत्ति तन्द्राश्रमान् ।
भृत्यापत्य कलत्र भर्त्सनम् अपि प्राप्नोति च व्यङ्गयताम् ॥ १८॥

दशासु शस्तासु शुभानि कुर्वन्त्यनिष्ट संज्ञा स्व शुभानि चैवम् ।
मिश्रासु निश्राणि दशा फलानि होरा फलं लग्न पतेः स मानम् ॥ १९॥

संज्ञाध्याये यस्य यद् रव्य मुक्तं कर्माजीवो यश्च यस्योपदिष्टः ।
भाव स्थानालोक योगोद्भवं च तत् तत् सर्वं तस्य योज्यं दशायाम् ॥ २०॥

छायां महाभूत कृतां च सर्वे अभिव्यञ्जयन्ति स्वदशाम् अवाप्य ।
कम्ब्वग्नि वाय्वम्बरजान् गुणांश्च नासास्य दृक् त्वक् छ्रवणानुमेयात् ॥ २१॥

शुभ फलददशाया तादृग् एवान्तरात्मा बहु जनयति पुंसां सख्यम् अर्थागमं च
कथित फल विपाकैस्तर्कयेद् वर्तमानां परिणमति फलाप्तिः स्वप्न चिन्ता स्व वीर्जैः
॥ २२॥

एक ग्रहस्य सदृशे फलयोर्विरोधे नाशं वदेद् यद् अधिकं परिपच्यते तत् ।
नान्यो ग्रहः सदृशम् अन्य फलं हिनस्ति स्वां स्वां दशाम् उपगताः स फल प्रदा
स्युः ॥ २३॥

---

## नवमोऽध्यायः

### अष्टकवर्ग

स्वाद् अर्कः प्रथमाय बन्धु निधन द्व्याज्ञा तपो द्यूनगो वक्रात्
स्वाद् इव तद्वद् एवरविजाच्छुक्रात् स्मरान्त्यारिषु ।
जीवाद् धर्म सुताय शत्रुषु दश त्र्यायारिगः शीतगोरेष्वेवान्त्य
तपः सुतेषु च बुधाल् लग्नात् स बन्ध्वन्त्यगः ॥ १॥

लग्नात् षट् त्रि दशायगः स धन धी धर्मेषु चाराच्छशी स्वात्
सास्तादिषु साष्ट सप्तसु रवेः षट् त्र्याय धीस्थो यमात् ।
धी त्र्यायाष्टम कण्टकेषु शशिजाज् जीवाद् व्ययायाष्टगः केन्द्रस्थश्च
सितात् तु धर्म सुखधी त्र्यायास्पदानङ्गगः ॥ २॥

वक्रस्तूपचयेष्विनात् स तनयेष्वाद्याधिकेषूदयाच् ।
चन्द्राद् दिग् विफलेषु केन्द्र निधन प्राप्त्यर्थगः स्वाच्छुभः ।
धर्मायाष्टम केन्द्रगोऽर्क तनयाज् ज्ञात् षट् त्रि धी लाभगः ।
शुक्रात् षड् व्यय लाभ म्न्त्युषु गुरोः कर्मान्त्यलाभारिषु ॥ ३॥

द्याद्यायाष्ट तपः सुखेषु भृगुजात् स त्र्यात्मजेष्विन्दुजः
साज्ञास्तेषु यमारयोर्व्ययरिपु प्राप्त्यष्टगो वाक् पतेः ।
धर्मायारि सुत व्ययेषु सवितुः स्वात् साद्य कर्म त्रिगः षट्
स्वायाष्ट सुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः ॥ ४॥

दिक् स्वाद्याष्टमदाय बन्धुषु कुजात् स्वात् त्रिकेष्वङ्गिराः सूर्यात्
सत्रि नवेषु धी स्व नवदिग् लाभारिगो भार्गवात् ।
जायायरथ नवात्मजेषु हिमगोर्मन्दात् त्रि षड् धी व्यये दिग् धी
षट् स्व सुखाय पूर्व नवगो ज्ञात् स स्मरश्च उदयात् ॥ ५॥

लग्नाद् आ सुत लाभरन्ध्र नवगः सान्त्यः शशाङ्कात् सितः
स्वात् साज्ञेषु सुख त्रि धी नवदश च्छिद्राप्तिगः सूर्यजात् ।
रन्ध्राय व्यगो रवेर्नवदश प्राप्त्यष्टधीस्थो गुरोर्ज्ञाद्
धी त्र्याय नवारिगस्त्रि नव षट् पुत्रायसान्त्यः कुजात् ॥ ६ ॥

मन्द स्वात् त्रि सुताय शत्रुषु शुभः साज्ञान्त्यगो भूमिजात्
केन्द्रायाष्टधनेष्विनाद् उपचयेष्वाद्ये सुखे च उदयात् ।
धर्मायारि दशान्त्य मृत्युषु बुधाच्चन्द्रात् त्री षड् लाभगः
षष्ठायान्त्य गतः सितास्सुर गुरोः प्राप्त्यन्त्यधी शत्रुषु ॥ ७॥

इति निगदितम् इष्टं नेष्टम् अन्यद् विशेषाद् अधिक फल विपाकं जन्म भात् तत्रदद्युः
।
उपचय गृह मित्र स्वोच्चगैः पुष्टम् इष्टं अवपचय गृह नीचारातिगैर्नेष्ट सम्पत् ॥ ८॥

---

दशमोऽध्यायः

कर्माजीव

अर्थाप्तिः पितृ पितृ पत्नि शत्रु मित्र भ्रातृ स्त्री मृतक जनाद् दिवाकराद्यैः ।
होरेन्द्वोर्दशम गतैर्विकल्पनीया भेन्द्वर्कास्पद पतिगांश नाथ वृत्त्या ॥ १॥

अर्कांशे तृण कनकार्ण भेषजाद्यैश्चन्द्रांशे कृषि जलजाङ्गनाश्रयाच्च ।
धात्वग्नि प्रहरण साहसैः कुजांशे सौम्यांशे लिपि गणितादि काव्य शिल्पैः ॥ २॥

जीवांशे द्विज विबुधाकरादि धर्मैः काव्यांशे मणि रजतादि गो महिष्यैः ।
सौरांशे श्रम वध भार नीच शिल्पैः कर्मेशाध्युषित नवांश कर्म सिद्धिः ॥ ३॥

मित्रारि स्व गृह गतैर्ग्रहैस्ततोऽर्थं तुङ्गस्थे बलिनि च भास्करे स्व वीर्यात् ।
आयस्थैरुदयधनाश्रितैश्च सौम्यैः संचिन्त्यं बल सहितैरनेकधा स्वम् ॥ ४॥

---

एकादशमोऽध्यायः

राजयोग

प्राहुर्यवनाः स्व तुङ्गगैः क्रूरैः क्रूर मतिर्महीपतिः ।
क्रूरैस्तु न जीव शर्मणः पक्षे क्षित्यधिपः प्रजायते ॥ १॥

वक्रार्कजार्क गुरुभिः सकलैस्त्रिभिश्च स्वोच्चेषु षोडश नृपाः कथितैकलग्ने ।
द्व्येकाश्रितेषु च तथाइकतमे विलग्ने स्व क्षेत्रगे शशिनि षोडश भूमिपाः स्युः ॥ २॥

वर्गोत्तम गते लग्ने चन्द्रे वा चन्द्र वर्जितः ।
चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशतिः स्मृताः ॥ ३॥

यमे कुम्भे अर्के अजे गवि शशिनि तैरेव तनुगैर्नृ युक्तिं सहालिस्थैः शशिज गुरु वक्रैर्नृ पतयः ।
यमेन्दू तुङ्गे अङ्गे सवितृ शशिजौ षष्ठ भवने तुलाजेन्दु क्षेत्रैः स सित कुज जीवैश्च नरपौ ॥ ४॥

कुजे तुङ्गे अर्केन्द्वोर्धनुषि यम लग्ने च कुपतिः पतिर्भूमेश्चान्यः क्षिति सुत विलग्ने स शशिनि ।
स चन्द्रे सौरे अस्ते सुर पति गुरौ चाप धरगे स्व तुङ्गस्थे भानावुदयम् उपयाते क्षिति पतिः ॥ ५॥

वृषे सेन्दौ लग्ने सवितृ गुरु तीक्ष्णांशु तनयैः सुहृज् जाया खस्थैर्भवति नियमान् मानव पतिः ।
मृगे मन्दे लग्ने सहजरिपु धर्म व्यय गतैः शशाङ्काद्यैः ख्यातः पृथु गुणयशाः पुङ्गल पतिः ॥ ६॥

हये सेन्दौ जीवे मृग मुख गते भूमि तनये स्व तुङ्गस्थौ लग्ने भृगुज शशिजावत्र नृ पती ।

सुतस्थौ वक्रार्की गुरु शशि सिताश्चापि हिबुके बुधे कन्या लग्ने भवति हि नृपोऽन्योऽपि गुणवान् ॥ ७॥

झषे सेन्दौ लग्ने घट मृग मृगेन्द्रेषु सहितैर्यमारार्कैर्योऽभूत् स खलु मनुजः शास्ति वसुधाम् ।
अजे सारे मूर्तौ शशि गृह गते चामर गुरौ ।
सुरेज्ये वा लग्ने धरणि पतिरन्योऽपि गुणवान् ॥ ८॥

कर्किणि लग्ने तत्स्थे जीवे चन्द्र सित ज्ञैराय प्राप्तैः ।
मेष गते अर्के जातं विद्याद् विक्रमयुक्तं पृथ्वी नाथम् ॥ ९॥

मृग मुखे अर्क तनयस्तनु संस्थः क्रिय कुलीर हरयोऽधिपयुक्ताः ।
मिथुन तौलि सहितौ बुध शुक्रौ यदि तदा पृथु यशाः पृथिवीशः ॥ १०॥

स्वोच्च संस्थे बुधे लग्ने भृगौ मेषूरणाश्रिते ।
स जीवे अस्ते निशा नाथे राजा मन्दारयोः सुते ॥ ११॥

अपि खल कुल जाता मानवाराज्य भाजः किम् उत नृप कुलोत्थाः प्रोक्त भू पालयोगैः ।
नृ पति कुल समुत्थाः पार्थिवा वक्ष्यमाणैर्भवति नृ पति तुल्यस्तेष्वभू पाल पुत्रः ॥ १२॥

उच्च स्व त्रिकोणगैर्बलस्थैस्त्र्याद्यैर्भू पति वंशजा नरेन्द्राः ।
पञ्चादिभिरन्य वंश जाता हीनैर्वित्तयुता न भूमि पालाः ॥ १३॥

लेखास्थे अर्के अजेन्दौ लग्ने भौमे स्वोच्चे कुम्भे मन्दे ।
चाप प्राप्ते जीवे राज्ञः पुत्रं विन्द्यात् पृथ्वी नाथम् ॥ १४॥

स्वर्क्षे शुक्रे पातालस्थे धर्म स्थानं प्राप्ते चन्द्रे ।
दुश्चिक्याङ्ग प्राप्ति प्राप्तैः शेषैर्जातः स्वामी भूमेः ॥ १५॥

सौम्ये वीर्ययुते तनु युक्ते वीर्याढ्ये च शुभे शुभयाते ।
धर्मार्थोपचयेष्ववशेषैर्धर्मात्मा नृपजः पृथिवीशः ॥ १६॥

वृषोदये मूर्ति धनारि लाभगैः शशाङ्क जीवार्क सुतापरैर्नृपः ।
सुखे गुरौ खे शशि तीक्ष्ण दीधिती यमोदये लाभ गतैर्नृपोऽपरैः ॥ १७॥

मेषूरणाय तनुगाः शशि मन्द जीवा ज्ञारौ धने सितरवी हिबुके नरेन्द्रम् ।

वक्रासितौ शशि सुरेज्य सितार्क सौम्या होरा सुखास्त शुभ खाप्ति गताः प्रजेशम् ॥
१८॥

कर्म लग्नयुत पाकदशायां राज्य लब्धिरथ वा प्रबलस्य ।
शत्रु नीच गृहयातदशायां च्छिद्र संश्रयदशा परिकल्प्या ॥ १९॥

गुरु सित बुध लग्ने सप्तमस्थे अर्क पुत्रे वियति दिवस नाथे भोगिनां जन्म विन्द्यात् ।
शुभ बलयुत केन्द्रैः क्रूर संस्थैश्च पापैर्व्रजति शबरदस्यु स्वामिताम् अर्थ भाक् च ॥
२०॥

---

## द्वादशोऽध्यायः

### नाभसयोग

नव दिग् वसवस्त्रिकाग्नि वेदैर्गुणिता द्वि त्रि चतुर्विकल्पजाः स्युः ।
यवनैस्त्रि गुणा हि षट् शती सा कथिता विस्तरतोऽग्र तत् समाः स्युः ॥ १॥

रज्जुर्मुशलं नलश्चराद्यैः सत्यश्चाश्रयजाञ्ज गादयोगान् ।
केन्द्रैः सद् असद् युतैर्दलाख्यौ स्त्रक् सर्पौ कथितौ पराशरेण ॥ २॥

योगा व्रजन्त्याश्रयजाः समत्वं यवाब्ज वज्राण्डज गोलकाद्यैः ।
केन्द्रोपगैः प्रोक्त फलौ दलाख्यावित्याहुरन्ये न पृथक् फलौ तौ ॥ ३॥

आसन्न केन्द्र भवन द्वयगैर्गदाख्यस्तन्वस्तगेषु शकटं विहगः ख बन्ध्वोः ।
शृङ्गाटकं नवम पञ्चम लग्न संस्थैर्लग्नान्यगैर्हलम् इति प्रवदन्ति तज् ज्ञाः ॥ ४॥

शकटाण्डज वच्छुभाशुबैर्वज्रं तद्विपरीतगैर्यवः ।
कमलं तु विमिश्र संस्थितैर्वापि तद्यदि केन्द्र बाह्यतः ॥ ५॥

पूर्व शास्त्रानुसारेण मया वज्रादयः कृताः ।
चौतुर्थे भवने सूर्याज् ज्ञ सितौ भवतः कथम् ॥ ६॥

कण्टकादि प्रव्न्त्तैस्तु चतुर्गृह गतैर्ग्रहैः ।
यूपेषु शक्ति दण्डाख्या होराद्यैः कण्टकैः क्रमात् ॥ ७॥

नौ कूट च्छत्र चापानि तद्वत् सप्तर्क्ष संस्थितैः ।
अर्ध चन्द्रस्तु नावाद्यैः प्रोक्तस्त्वन्यत्रर्क्ष संस्थितैः ॥ ८॥

एकान्तर गतैरर्थात् समुद्रः षड् गृहाश्रितैः ।
विलग्नादि स्थितैश्चक्रम् इत्याकृतिज संग्रहः ॥ ९॥

संख्या योगाः स्युः सप्त सप्तर्क्षक्ष संस्थिरेकापायाद् वल्लकी दामिनी च
पाशः केदारः शूलयोगो युगं च गोलश्चान्यान् पूर्वम् उक्तान् विहाय ॥ १०॥

ईर्ष्युर्विदेश निरतोऽध्वरुचिश्चरज्ज्वां मानी धनी च मुशले बहु कृत्य सक्तः ।
व्यङ्गः स्थिराढ्य निपुणो नलजः स्रग् उत्थो भोगान्वितो भुज गजो बहु दुःख भाक् स्यात् ॥ ११॥

आश्रयोक्तास्तु विफला भवन्त्यन्यैर्विमिश्रिताः ।
मिश्रा यैस्ते फलं दद्युरमिश्राः स्व फल प्रदाः ॥ १२॥

यज्वर्थ भाक् सततम् अर्थरुचिर्गदायां तद्वृत्ति भुक् शकटजः सरुजः कुदारः ।
दूतोऽटनः कलह कृद् विहगे प्रदिष्टः शृङ्गाटके चिर सुखी कृषिकृद् धलाक्ष्ये ॥ १३॥

वज्रे अन्त्य पूर्व सुखिनः सुभगोऽतिशूरो वीर्यान्वितोऽप्यथयवे सुखितो वयोऽन्तः ।
विख्यात कीर्त्यमित सौख्य गुणश्च पद्मे वाप्यां तनु स्थिर सुखो निधि कृन् न दाता ॥ १४॥

त्यागात्मवान् क्रतु वरैर्यजते च यूपे हिंस्रोऽथ गुप्त्यधिकृतः शरकृच्छराख्ये ।
नीचोऽलसः सुखधनैर्वियुतश्च शक्तौ दण्डे प्रियैर्विरहितः पुरुषान्त्य वृत्तिः ॥ १५॥

कीर्त्या युतश्चल सुखः कृपणश्च नौजः कूटे अनृत प्लवन बन्धनपश्च जातः ।
छत्रोद्भवः स्व जन सौख्य करोऽन्त्य सौख्यः शूरश्च कार्मुक भवः प्रथमान्त्य सौख्यः ॥ १६॥

अर्धेन्दुजः सुभग कान्त वपुः प्रधानस्तोयालये नर पति प्रतिमस्तु भोगी ।
चक्रे नरेन्द्र मुकुट द्युति रञ्जिताङ्घ्रिर्वीणोद्भवश्च निपुणः प्रिय गीत नृत्यः ॥ १७॥

दातान्य कार्य निरतः पशुपश्च दाम्नि पाशे धनार्जन विशील स भृत्य बन्धुः ।
केदारजः कृषि करः सुबहूपयोष्यः शूरः क्षतो धनरुचिर्विधनश्च शूले ॥ १८॥

धन विरहितः पाखण्डी वा युगे त्वथ गोलके विधन मलिनो ज्ञानोपेतः कुशिल्प्यलसोऽटनः ।
इति निगदिता योगाः सार्द्धं फलैरिह नाभसा नियत फलदाश्चिन्त्या ह्येते समस्तदशास्वपि ॥ १९॥

---

त्रयोदशोऽध्यायः

चन्द्रयोग

अधम सम वरिष्ठान्यर्क केन्द्रादि संस्थे शशिनि विनय वित्त ज्ञानधी नैपुणानि ।

अहनि निशि च चन्द्रे स्वे अधिमित्रांशके वा सुर गुरु सितदृष्टे वित्तवान् स्यात् सुखी च ॥ १॥

सौम्यैः स्मरारि निधनेष्वधियोगेन्दोस्तस्मिंश्चमूप सचिव क्षिति पाल जन्म ।
सम्पन्न सौख्य विभवा हत शत्रवश्च दीर्घायुषो विगतरोग भयाश्च जाताः ॥ २॥

हित्वार्कं सुनफानफादुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोऽन्यैस्त्वसौ ।
केन्द्रे शीतकरेऽथ वा ग्रहयुते केमद्रुमो नेष्यते केचित् केन्द्र नवांशकेषु च वदन्त्युक्तिः प्रसिद्धा न ते ॥ ३॥

त्रिंशत् सरूपाः सुनफानफाख्याः षष्टित्रयं दौरुधुरे प्रभेदाः ।
इच्छा विकल्पैः क्रमशोऽभिनीय नीते निव्ृत्तिः पुनरन्य नीतिः ॥ ४॥

स्वयम् अधिगत वित्तः पार्थिवस्तत् समो वा भवति हि सुनफायां धी धन ख्यातिमांश्च ।
प्रभुर गद् शरीरः शीलवान् ख्यात कीर्तिर्विषय सुख सुवेषो निव्ृर्तश्चानफायाम् ॥ ५॥

उत्पन्न भोग सुख भुग् धन वाहनाढ्यस्त्यागान्वितो दुरुधुरा प्रभवः सुभृत्यः ।
केमद्रुमे मलिनदुःखित नीच निःस्वाः प्रेष्याः खलाश्च नृपतेरपि वंश जाताः ॥ ६॥

उत्साह शौर्यधन साहस वान् महीजः सौम्यः पटुः सुवचनो निपुणः कलासु ।
जीवोऽर्थधर्म सुख भाङ् नृप पूजितश्च कामी भृगुर्बहु धनो विषयोपभोक्ता ॥ ७॥

पर विभव परिच्छदोपभोक्तारवि तनयो बहु कार्यकृद् गणेशः ।
अशुभ कृद् उडुपोऽह्नि दृश्य मूर्तिर्गलित तनुश्च शुभोऽन्यथान्यद् ऊह्यम् ॥ ८॥

लग्नाद् अतीव वसुमान् वसुमाञ् छशाङ्कात् सौम्य ग्रहैरुपचयोपगतैः समस्तैः ।
द्वाभ्यां समोऽल्प वसुमांश्च तदूनतायाम् अन्येष्वसत्स्वपि फलेष्विदम् उत्कटेन ॥ ९॥

---

चतुर्दशोऽध्यायः

द्विग्रहयोग

तिग्मांशुर्जनयत्युषेश सहितो यन्त्राश्म कारं नरं भौमेनाघरतं बुधेन निपुणं धी कीर्ति सौख्यान्वितम् ।

क्रूरं वाक् पतिनान्य कार्यं निरतं शुक्रेणरङ्गायुधैर्लब्धस्वं रविजेनधातु कुशलं भाण्ड प्रकारेषु वा ॥ १॥

कूट स्त्र्यासव कुम्भ पण्यम् अशिवं मातुः स वक्रः शशी स ज्ञः प्रश्रित वाक्यम् अर्थ निपुणं सौभाग्य कीर्त्यान्वितम् ।
विक्रान्तं कुल मुख्यम् अस्थिर मतिं वित्तेश्वरं साङ्गिरा वस्त्राणां स सितः क्रियादि कुशलं सार्किः पुनर्भू सुतम् ॥ २॥

मूलादि स्नेह कूटैर्व्यवहरति वणिग् बाहु योद्धा स सौम्ये पुर्यध्यक्षः स जीवे भवति नर पतिः प्राप्त वित्तो द्विजो वा ।
गोपो मल्लोऽथदक्षः परयुवति रतो द्यूत कृत् सासुरेज्ये दुःखार्तोऽसत्य संधः स सवितृ तनये भूमिजे निन्दितश्च ॥ ३॥

सौम्ये रङ्ग चरो बृहस्पति युते गीत प्रियो नृत्यविद् वाग्मी भू गणपः सितेन मृदुना माया पटुर्लङ्घकः ।
सद् विद्यो धनदारवान् बहु गुणः शुक्रेणयुक्ते गुरौ ज्ञेयः श्मश्रु करोऽसितेन घटकृज् जातोऽन्नकारोऽपि वा ॥ ४॥

असित सित समागमे अल्प चक्षुर्युवति समाश्रय सम्प्रवृद्ध वित्तः ।
भवति च लिपि पुस्तक चित्र वेत्ता कथित फलैः परतो विकल्पनीयाः ॥ ५॥

---

## पञ्चदशोऽध्यायः

### प्रव्रज्यायोग

एकस्थैश्चतुरादिभिर्बलयुतैर्जाताः पृथग् वीर्यगैः शाक्या जीविक भिक्षु वृद्ध चरका निर्ग्रन्थ वन्याशनाः ।
माहेय ज्ञ गुरु क्षपा कर सित प्राभाकरीनैः क्रमात् प्रव्रज्या बलिभिः समा परजितैस्तत् स्वामिभिः प्रच्युतिः ॥ १॥

रवि लुप्त करैरदीक्षिता बलिभिस्तद्गत भक्तयो नराः ।
अभियाचित मात्रदीक्षिता निहतैरन्य निरीक्षितैरपि ॥ २॥

जन्मेशोऽन्यैर्यद्यदृष्टोऽर्क पुत्रं पश्यत्यार्किर्जन्मपं वा बलोनम् ।
दीक्षां प्राप्नोत्यार्कि दृक् काण संस्थे भौमार्क्यंशे सौरदृष्टे च चन्द्रे ॥ ३॥

सुर गुरु शशि होरा स्वार्के दृष्टासु धर्मे गुरुरथ नृपतीनां योगजस्तीर्थ कृत् स्यात् ।
नवम भवन संस्थे मन्दगे अन्यैर्दृष्टे भवति नरपयोगे दीक्षितः पार्थिवेन्द्रः ॥ ४॥

षोडशोऽध्यायः

नक्षत्रफल

प्रिय भूषणः सुरूपः सुभगो दक्षोऽश्विनीषु मतिमांश्च ।
कृत निश्चय सत्यारुग् दक्षः सुखितश्च भरणीषु ॥ १॥

बहु भुक् परदाररतस्तेजस्वी कृत्तिकासु विख्यातः ।
रोहिण्यां सत्य शुचिः प्रियंवदः स्थिर मतिः सुरूपश्च ॥ २॥

चपलश्चतुरो भीरुः पटुरुत्साही धनी मृगे भोगी ।
शठ गर्वितः कृतघ्नो हिंस्रः पापश्चरौद्रऋक्षे ॥ ३॥

दान्तः सुखी सुशीलो दुर्मेधारोग भाक् पिपासुश्च ।
अल्पेन च संतुष्टः पुनर्वसौ जायते मनुजः ॥ ४॥

शान्तात्मा सुभगः पण्डितो धनी धर्म संसृतः पुष्ये ।
शठः सर्व भक्ष पापः कृतघ्नधूर्तश्च भौजङ्गे ॥ ५॥

बहु भृत्यधनो भोगी सुर पितृ भक्तो महोद्यमः पित्र्ये ।
प्रिय वाग् दाताद्युतिमान् अटनो नृप सेवको भाग्ये ॥ ६॥

सुभगो विद्याप्तधनो भोगी सुखभाक् द्वितीय फाल्गुन्याम् ।
उत्साही धृष्टः पानपो घृणी तस्करो हस्ते ॥ ७॥

चित्राम्बर माल्यधरः सुलोचनाङ्गश्च भवति चित्रायाम् ।
दान्तो वणिक् कृपालुः प्रिय वाग् धर्माश्रितः स्वातौ ॥ ८॥

ईर्ष्युर्लुब्धो द्युतिमान् वचन पटुः कलह कृद् विशाखासु ।
आढ्यो विदेश वासी क्षुधालुरटनोऽनुराधासु ॥ ९॥

ज्येष्ठासु न बहु मित्रः संतुष्टो धर्म कृत् प्रचुर कोपः ।
मूले मानी धनवान् सुखी न हिंस्रः स्थिरो भोगी ॥ १०॥

इष्टानन्द कलत्रो मानी दृढ सौहृन्दश्च जलदैवे ।
वैश्वे विनीतधार्मिक बहु मित्र कृतज्ञ सुभगश्च ॥ ११॥

श्रीमाञ् छ्रवणे श्रुतवान् उदारदारो धनान्वितः ख्यातः ।
दाताढ्यः शूरो गीत प्रियो धनिष्ठासु धन लुब्धः ॥ १२॥

स्फुट वाग् व्यसनी रिपुहा साहसिकः शतभिषजि दुर्ग्राह्यः ।

भाद्रपदासु द्वि गनः स्त्री जितधनी पटुरदाता च ॥ १३॥

वक्ता सुखी प्रजावान् जित शत्रुर्धार्मिको द्वितीयासु ।
सम्पूर्णाङ्गः सुभगः शूरः शुचिरर्थवान् पौष्णे ॥ १४॥

---

सप्तदशोऽध्यायः

चन्द्रराशिशील

वृत्तातांम्रदृग् उष्ण शाक लघु भुक् क्षिप्र प्रसादोऽटनः कामी दुर्बल जानुरस्थिरधनः शूरोऽङ्गना वल्लभः ।
सेवाज्ञः कनखी व्रणाङ्कित शिरा मानी सहोत्थाग्रजः शक्त्या पाणि तले अङ्कितोऽतिचपलस्तोये अतिभीरुः क्रिये ॥ १॥

कान्तः खेल गतिः पृथु ऊरु वदनः पृष्ठास्य पार्श्वाङ्कितस्त्यागी क्लेश सहः प्रभुः ककुदवान् कन्या प्रजः श्लेष्मलः
पूर्वैर्बन्धु धनात्मजैर्विरहितः सौभाग्ययुक्तः क्षमी दीप्ताग्निः प्रमदा प्रियः स्थिर सुहृन् मध्यान्त्य सौख्यो गवि ॥ २॥

स्त्री लोलः सुरतोपचार कुशलस्ताम्रेक्षणः शास्त्रविद् दूतः कुञ्चित मूर्धजः पटु मतिर्हास्येङ्गितद्यूतवित् ।
चार्वङ्गः प्रिय वाक् प्रभ क्षणरुचिर्गीत प्रियो नृत्यवित् क्लीबैर्याति रतिं समुन्नत नसश्चन्द्रे तृतीयऋक्षगे ॥ ३॥

आवक्रद्रुतगः समुन्नत कटिः स्त्री निर्जितः सत् सुहृद् दैवज्ञः प्रचुरालय क्षयधनैः संयुज्यते चन्द्रवत् ।
ह्रस्वः पीन गलः समेति च वंश साम्ना सुहृद् वत्सलस्तोयोद्यानरतः स्व वेश्म सहिते जातः शशाङ्के नरः ॥ ४॥

तीक्ष्णः स्थूल हनुर्विशाल वदनः पिङ्गेक्षणोऽल्पात्मजः स्त्री द्वेषी प्रिय मांस कानन नगः कुप्यत्यकार्ये चिरम् ।
क्षुत् तृणोदरदन्त मानसरुजा सम्पीडितस्त्यागवान् विक्रान्तः स्थिरधीः सुगर्वित मना मातुर्विधेयोऽर्क भे ॥ ५॥

व्रीडा मन्थर चारु वीक्षण गतिः स्त्रस्तांस बाहुः सुखी श्लक्ष्णः सत्यरतः कलासु निपुणः शास्त्रार्थविद् धार्मिकः ।
मेधावी सुरत प्रियः पर गृहैर्वित्तैश्च संयुज्यते कन्यायां परदेशगः प्रिय वचाः कन्या प्रजोऽल्पात्मजः ॥ ६॥

देव ब्राह्मण साधु पूजनरतः प्राज्ञः शुचिः स्त्री जितः प्रांशुश्च उन्नत नासिकः कृश चलद् गात्रोऽटनोऽर्थान्वितः
हीनाङ्गः क्रय विक्रयेषु कुशलो देवद्वि नामा सरुक् बन्धूनाम् उपकार कृद् विरुषितस्त्यक्तस्तु तैः सप्तमे ॥ ७॥

पृथुल नयन वक्षा वृत्त जङ्घोरु जानुर्जनक गुरु वियुक्तः शैशवे व्याधितश्च ।
नर पति कुल पूज्यः पिङ्गलः क्रूर चेष्टो झष कुलिश खगाङ्कश्छन्न पापोऽलिजातः ॥ ८॥

व्यादिर्घास्य शिरो धरः पितृ धनस्त्यागी कविर्वीर्यवान् वक्ता स्थूलरद श्रवोऽधर नसः कर्मोद्यतः शिल्पवित् ।
कुब्जांशः कुनखी समांसल भुजः प्रागल्भवान् धर्मविद् बन्धु द्विट् न बलात् समैति च वंश साम्नैक साध्योऽश्वजः ॥ ९॥

नित्यं लालयति स्वदार तनयान् धर्मध्वजोऽधः कृशः स्वक्षः क्षाम कटिर्गृहीत वचनः सौभाग्ययुक्तोऽलसः ।
शीतालुर्मनुजोऽटनश्च मकरे सत्वाधिकः काव्य कृल् लुब्धोऽगम्य जराङ्गनासु निरतः सन्त्यक्त लज्जोऽघृणः ॥ १०॥

करभ गलः शिरालुः खर लोमशदीर्घ तनुः पृथु चरणोरु पृष्ठ जघनास्य कटिर्जरठः ।
पर वनितार्थ पाप निरतः क्षय वृद्धि युतः प्रिय कुसुमानुलेपन सुहृद् घटजोऽध्व सहः ॥ ११॥

जल परधन भोक्तादार वासोऽनुरक्तः समरुचिर शरीरस्तुङ्ग नासो बृहत्कः ।
अभिभवति स पत्नान् स्त्री जितश्चारु दि्ष्टर्द्युति निधि धन भोगी पण्डितश्चान्त्यराशौ ॥ १२॥

बलवति राशौ तदधिपतौ च स्व बलयुतः स्याद् यदि तुहिनांशुः ।
कथित कलानाम् अविकलदाता शशिवद् अतोऽन्येत्यनुपरिचिन्त्याः ॥ १३॥

---

अष्टादशोऽध्यायः

राशिशील

प्रथितश्चतुरोऽटनोऽल्प वित्तः क्रियगे त्वायुध भृद् वितुङ्ग भागे ।
गवि वस्त्र सुगन्ध पण्य जीवी वनिताद् विट् कुशलश्च गो यवाद्ये ॥ १॥

विद्या ज्योतिष वित्तवान् मिथुनगे भानौ कुलीरे स्थिते तीक्ष्णोऽस्वः पर कार्य कृच्छ्रम पथ क्लेशैश्च संयुज्यते ।
सिंहस्थे वन शैल गो कुलरतिर्वीर्यान्वितोऽज्ञः पुमान् कन्यास्थे लिपि लेख्य काव्य गणित ज्ञानान्वितः स्त्री वपुः ॥ २॥

जातस्तौलिनि सौण्डिकोऽध्वनि रतो हैरण्यको नीच कृत् क्रूरः साहसिको विशार्जितधनः शस्त्रान्तगोऽलि स्थिते ।
सत् पूज्यो धनवान् धनुर्धर गते तीक्ष्णो भिषक् कारुको नीचोऽज्ञः कुवणिङ् मृगे अल्पधनवांल् लब्धोऽन्य भाग्यैर्रतः ॥ ३॥

नीचो घटे तनय भाग्य परिच्युतोऽस्व स्तोयोत्थ पण्य विभवो बनिताद् ऋतोऽन्त्ये ।
नक्षत्र मानव तनु प्रतिमे विभागे लक्ष्मादिशेत् तुहिनरश्मि दिनेशयुक्ते ॥ ४॥

नर पति सत् कृतोऽटनश्चमूप वणिक् सधनः क्षत तनुश्चौर भूरि विषयांश्च कुजः स्व गृहे ।
युवति जितान् सुहृत्सु विषमान् परदाररतान् कुहक सुवेष भीरु पौर्षान् सित भे जनयेत् ॥ ५॥

बौधे असहस्तनयवान् विसुहृत् कृतज्ञो गान्धर्वयुद्ध कुशलः कृपणोऽभयोऽर्थी ।
चान्द्रे अर्थवान् सलिलयान समर्जित स्वः प्राज्ञश्च भूमि तनये विकलः खलश्च ॥ ६॥

निःस्वः क्लेश सहो वनान्तर चरः सिंहे अल्पदारात्मजो जैवे नैकरिपुर्नरेन्द्र सचिवः ख्यातोऽभयाल्पात्मजः ।
दुःखार्तो विधनोऽटनोऽनृतरतस्तीक्ष्णश्च कुम्भ स्थिते भौमे भूरि धनात्मजो मृग गते भूपोऽथ वा तत् समः ॥ ७॥

द्यूतऋण पानरत नास्तिक चौर निःस्वाः कुस्त्रीक कूटकृद् असत्यरताः कुजऋक्षे ।
आचार्य भूरि सुतदारधनार्जनेष्टाः शौक्रे वदान्यगुरु भक्ति रताश्च सौम्ये ॥ ८॥

विकत्थनः शास्त्र कला विदग्धः प्रियंवदः सौख्यरतस्तृतीये ।
जलार्जित स्वः स्व जनस्य शत्रुः शशाङ्कजे शीत करऋक्षयुक्ते ॥ ९॥

स्त्री द्वेष्यो विधन सुखात्मजोऽटनोऽज्ञः स्त्री लोलः स्व परिभवोऽर्कराशिगे ज्ञे ।
त्यागी ज्ञः प्रचुर गुणः सुखी क्षमावान् युक्ति ज्ञो विगत भयश्च षष्ठराशौ ॥ १०॥

पर कर्म कृद् अस्व शिल्प बुद्धी ऋणवान् विष्टि करो बुधे अर्कजऋक्षे ।
नृप सत्कृत पण्डिताप्त वाक्यो नवमे अन्त्ये जित सेवकान्त्य शिल्पः ॥ ११॥

सेना निर्बहु वित्तदार तनयो दाता सुभृत्यः क्षमी तेजो दार गुणान्वितः सुर गुरौ ख्यातः पुमान् कौज भे ।
कल्पाङ्गः सधनार्थ मित्र तनयस्त्यागी प्रियः शौक्र भे बौधे भूरि परिच्छदात्मज सुहृत् साचिव्ययुक्तः सुखी ॥ १२॥

चान्द्रे रत्न सुत स्वदार विभव प्रज्ञा सुखैरन्वितः सिंहे स्याद् बल नायकः सुर गुरौ प्रोक्तं च यच्चन्द्र भे ।
स्वऋक्षे माण्डलिको नरेन्द्र सचिवः सेनापतिर्वाधनी कुम्भे कर्कटवत् फलानि मकरे नीचोऽल्प वित्तोऽसुखी ॥ १३॥

परयुवति रतस्तदर्थ वादैर्हृत विभवः कुल पांसनः कुजऋक्षे ।
स्व बल मति धनो नरेन्द्र पूज्यः स्व जन विभुः प्रथितोऽभयः सिते स्वे ॥ १४॥

नृप कृत्य करोऽर्थवान् कलाविन् मिथुने षष्ठ गते अतिनीच कर्मा
रविजऋक्ष गते अमरारि पूज्ये सुभगः स्त्री विजितो रतः कुनार्य्याम् ॥ १५॥

द्वि भार्योऽर्थी भीरुः प्रबल मद शोकश्च शशि भे हरौ योषाप्तार्थः प्रवरयुवतिर्मन्द तनयः ।
गुणैः पूज्यः स स्वस्तुरग सहिते दानव गुरौ झषे विद्वान् आढ्यो नृप जनित पूजोऽतिसुभगः ॥ १६॥

मूर्खोऽटनः कपटवान् विसुहृद् यमे अजे कीटे तु बन्ध वध भाक् चपलोऽघृणश्च ।
निर्ह्रीर्सुखार्थ तनयः स्खलितश्च लेख्ये रक्षा पतिर्भवति मुख्य पतिश्च बौधे ॥ १७॥

वर्ज्य स्त्रीष्टो न बहु विभवो भूरि भार्यो वृषस्थे ख्यातः स्वोच्चे गण पुर बल ग्राम पूज्योऽर्थवांश्च ।
कर्किण्यस्वो विकलदशनो मातृ हीनोऽसुतोऽज्ञः सिंहे अनार्यो बिसुख तनयो विष्टि कृत् सूर्य पुत्रे ॥ १८॥

स्वन्तः प्रत्ययितो नरेन्द्र भवने सत् पुत्र जायाधनो जीव क्षेत्र गते अर्कजे पुर बल ग्रामाग्र नेताथ वा ।
अन्य स्त्री धन संवृतः पुर बल ग्रामाग्रणीर्मन्ददृक् स्व क्षेत्रे मलिनः स्थिरार्थ विभवो भोक्ता च जातः पुमान् ॥ १९॥

शिशिर कर समागमेक्षणानां सदृश फलं प्रवदन्ति लग्न जातम् ।

फलम् अधिकम् इदं यद् अत्र भावाद् भवन भ नाथ गुणैर्विचिन्तनीयम् ॥ २०॥

---

एकोनविंशोऽध्यायः

दृष्टिफल

चन्द्रे भूप बुधौ नृपोपम गुणी स्तेनोऽधनश्चाजगे निःस्वः स्तेन नृ मान्य भूपधनिनः प्रेष्यः कुजाद्यैर्गवि ।
नृस्थे अयो व्यवहारि पार्थिव बुधाभिस्तन्तु वायोऽधनो स्वत्रृक्षे योद्धृ कवि ज्ञ भूमि पतयोऽयो जीवि दृग् रोगिणौ ॥ १॥

ज्योतिर्ज्ञाढ्य नरेन्द्र नापित नृ पक्ष्मेशा बुधाद्यैर्हरौ तद्वद् भूप चमूप नैपुणयुताः षष्ठे अशुभैः स्त्र्याश्रयः ।
जूके भूप सुवर्ण कार वणिजः शेषेक्षिते नैकृती कीटे युग्म पिता नतश्चरजको व्यङ्गोऽधनो भूपतिः ॥ २॥

ज्ञात्युर्वीश जनाश्रयश्च तुरगे पापैः सद् अम्भः शठश्चात्युर्वीश नरेन्द्र पण्डितधनी द्रव्योन भूपो मृगे ।
भूपो भूप समोऽन्यदार निरतः शेषैश्च कुम्भ स्थिते हास्यज्ञो नृपतिर्बुधश्च झषगे पापश्च पापेक्षिते ॥ ३॥

होरेशत्रृक्षदलाश्रितैः शुभ करो दृष्टः शशी तद्गतस्त्र्यंशे तत् पतिभिः सुहृद् भवनगैर्वा वीक्षितः शस्यते ।
यत् प्रोक्तं प्रति राशि वीक्षण फलं तद्वादशांशे स्मृतं सूर्याद्यैरवलोकिते अपि शशिनि ज्ञेयं नवांशेष्वतः ॥ ४॥

आरक्षिको वधरुछिः कुशलो नियुद्धे भूपोऽर्थवान् कलह कृत् क्षितिजांश संस्थे ।
मूर्खोऽन्यदार निरतः सुकविः सितांशे सत् काव्य कृत् सुख परोऽन्य कलत्रगश्च ॥ ५॥

बौधे हि रङ्ग चर चौर कवीन्द्र मन्त्री गेय ज्ञ शिल्प निपुणः शशिनि स्थिते अंशे ।
स्वांशे अल्प गात्रधन लुब्ध तपस्वि मुख्यः स्त्रीपोऽप्यकृत्य निरतश्च निरीक्ष्यमाणम् ॥ ६॥

स क्रोधो नर पति संमतो निधीशः सिंहांशे प्रभुर सुतोऽतिहिंस्र कर्मा ।
जीवांशे प्रथित बलो रणोपदेष्टा हास्य ज्ञः सचिव विकाम वृद्ध शीलः ॥ ७॥

अल्पापत्यो दुःखितः सत्यपि स्वे मानासक्तः कर्मणि स्वे अनुरक्तः ।

दुष्ट स्त्रीष्टः कृपणश्चार्किं भागे चन्द्रे भानौ तद्वद् इन्द्वादि दृष्टे ॥ ८॥

वर्गोत्तम स्व परगेषु शुभं यद् उक्तं तत् पुष्ट मध्य लघुता शुभम् उत्क्रमेण ।
वीर्यान्वितोऽंशक पतिर्निरुणद्धि पूर्वं राशी क्षणस्य फलम् अंश फलं ददाति ॥ ९॥

---

विंशोऽध्यायः

भाव

शूरः स्तब्धो विकल नयनो निर्घृणोऽर्के तनुस्थे मेषे स स्वस्तिमिर नयनः सिंह संस्थे निशाधः ।
नीचे अन्धोऽस्वः शशि गृह गते बुद्बुदाक्षः पतङ्गे भूरि द्रव्यो नृप हृतधनो वक्ररोगी द्वितीये ॥ १॥

मति विक्रमांस्तृतीयगे अर्के विसुखः पीडित मानशश्चतुर्थे ।
असुतो धन वर्जितस्त्रिकोणे बलवाञ् छत्रु जितश्च शत्रु याते ॥ २॥

स्त्रीभिर्गतः परिभवं मदगे पतङ्गे स्वल्पात्मजो निधनगे विकलेक्षणश्च ।
धर्मे सुतार्थ सुख भाक् सुख शौर्य भाक् खे लाभे प्रभूतधनवान् पतितस्तु रिःफे ॥ ३॥

मूकोन्मत्त जडान्ध हीन बधिर प्रेष्याः शशाङ्कोदये स्वर्क्षजोच्च गते धनी बहु सुतः स स्वः कुटुम्बी धने ।
हिंस्त्रो भ्रातृ गते सुखे स तनये तत् प्रोक्त भावान्वितो नैकारिर्मृदु काय वह्नि मदनस्तीक्ष्णोऽलसश्चारिगे ॥ ४॥

ईर्षुस्तीव्र मदो मदे बहु मतिर्व्याध्यर्दितश्चाष्टमे सौभाग्यात्मज मित्र बन्धु धन भाग् धर्म स्थिते शीतगौ ।
निष्पत्तिं समुपैति धर्मधनधी शौर्यैर्युतः कर्मगे क्यातो भाव गुणान्वितो भव गते क्षुद्रोऽङ्ग हीनो व्यये ॥ ५॥

लग्ने कुजे क्षत तनुर्धनगे कद् अन्नो धर्मे अघवान् दिन कर प्रतिमोऽन्य संस्थः ।
विद्वान् धनी प्रखल पण्डित मन्त्र्यशत्रुर्धर्मज्ञ विश्रुत गुणः परतोऽर्कवज् ज्ञे ॥ ६॥

विद्वान् सुवाक्यः कृपणः सुखी च धी मान शत्रुः पितृतोऽधिकश्च ।
नीचस्तपस्वी सधनः स लाभः खलश्च जीवे क्रमशो विलग्नात् ॥ ७॥

स्मर निपुणः सुखितश्च विलग्ने प्रिय कलहोऽस्त गते सुरतेप्सुः ।
तनय गते सुखितो भृगु पुत्रे गुरु वदतोऽन्य गृहे सधनोऽन्त्ये ॥ ८॥

अदृष्टार्थो रोगी मदन वशगोऽत्यन्त मलिनः शिशुत्वे पीडार्तः सवितृ सुत लग्नेत्यलस वाक् ।
गुरु स्वऋक्षोच्चस्थे नृ पति सदृशो ग्राम पुरपः
सुविद्वांश्चार्वङ्गो दिन कर समोऽन्यत्र कथितः ॥ ९॥

सुहृद् अरि परकीय स्वऋक्ष तुङ्ग स्थितानां फलम् अनुपरिचिन्त्यं लग्नदेहादि भावैः ।
समुपचय विपत्ती सौम्य पापेषु सत्यः कथयति विपरीतं रिःफ षष्ठाष्ट भेषु ॥ १०॥

उच्च त्रिकोण स्व सुहृ्च्छत्रु नीच गृहार्कगैः ।
शुभं सम्पूर्ण पादोनदल पादाल्प निष्फलम् ॥ ११॥

---

एकविंशोऽध्यायः

आश्रययोग

कुल सम कुल मुख्य बन्धु पूज्याधनि सुखि भोगि नृपाः स्व भैक वृद्ध्या ।
पर विभव सुहृत् स्व बन्धु पोष्या गणप बलेश नृपाश्च मित्र भेषु ॥ १॥

जनयति नृपम् एकोऽप्युच्चगो मित्रदृष्टः प्रचुरधन समेतं मित्रयोगाच्च सिद्धम् ।
विधन विसुख मूढ व्याधितो बन्ध तप्तो वधदुरित समेतः शत्रु नीचऋक्षगेषु ॥ २॥

न कुम्भ लग्नं शुभम् आह सत्यो न भाग भेदाद् यवना वदन्ति ।
कस्यांश भेदो न तथास्ति राशेरतिप्रसङ्गस्त्विति विष्णु गुप्तः ॥ ३॥

यातेष्वसत् स्व सम भेषु दिनेश होरां ख्यातो महोद्यम बलार्थयुतोऽतितेजाः ।
चान्द्रीं शुभेषु युजि मार्दव कान्ति सौख्य सौभाग्यधी मधुर वाक्ययुतः प्रजातः ॥ ४॥

तास्वेव होरा स्व परऋक्षगेषु ज्ञेया नराः पूर्व गणेषु मध्याः ।
व्यत्यस्त होरा भवन स्थितेषु मर्त्या भवन्त्युक्त गुणैर्विहीनाः ॥ ५॥

कल्याणरूप गुणम् आत्म सुहृ्द् दृकोणे चन्द्रोऽन्यगस्तदधिनाथ गुणं करोति ।
व्यालोद्ययायुध चतुश्चरणाण्डजेषु तीक्ष्णोऽतिहिंस्र गुरु तल्परतोऽटनश्च ॥ ६॥

स्तेनो भोक्ता पण्डिताढ्यो नरेन्द्रः क्लीबः शूरो विष्टिकृद् दास वृत्तिः ।
पापो हिंस्रोऽभीश्च वर्गोत्तमांशेष्वेषाम् ईषाराशिवद् द्वादशांशैः ॥ ७॥

जायान्वितो बल विभूषण सत्वयुक्तोस्तेजोऽतिसाहसयुतश्च कुजे स्व भागे ।
रोगी मृत स्वयुवतिर्विषमोऽन्यदारो दुःखी परिच्छदयुतो मलिनोऽर्क पुत्रे ॥ ८॥

स्वांशे गुरौ धनयशः सुख बुद्धि युक्तास्तेजस्वि पूज्य निरुग् उद्यम भोगवन्तः ।
मेधा कलाक पट काव्य विवाद् शिल्प शास्त्रार्थ साहसयुताः शशिजे अतिमान्याः ॥ ९॥

स्वे त्रिंशांशे बहु सुत सुखारोग्य भाग्यार्थरूपः शुक्रे तीक्ष्णः सुललित वपुः सुप्रकीर्णेन्द्रियश्च ।
शूर स्तब्धौ विषम वधकौ सद् गुणाढ्यौ सुखिजौ चार्वङ्गे
अष्टौ रवि शशि युतेष्वार पूर्वांशकेषु ॥ १०॥

---

द्वाविंशोऽध्यायः

प्रकीर्णक

स्वत्रृक्ष तुङ्ग मूल त्रिकोणगाः कण्टकेषु यावन्ताश्रिताः ।
सर्वैव ते अन्योन्य कारकाः कर्मगस्तु तेषां विशेषतः ॥ १॥

कर्कटोदय गते यथोडुपे स्वोच्चगाः कुजयमार्क सूरयः ।
कारका निगदिताः परस्परं लग्नगस्य सकलोऽम्बराम्बुगः ॥ २॥

स्व त्रिकोणोच्चगो हेतुरन्योन्यं यदि चर्मगः ।
सुहृत् तद्गुण सम्पन्नः कारकश्चापि स स्मृतः ॥ ३॥

शुभं वर्गोत्तमे जन्म वेशि स्थाने च सद् गृहे ।
अशून्येषु च केन्द्रेषु कारकाख्य ग्रहेषु च ॥ ४॥

मध्ये वयसः सुख प्रदाः केन्द्रस्था गुरु जन्म लग्नपाः ।
पृष्ठोभयकोदयत्रृक्षगास्त्वन्ते अन्तः प्रथमेषु पाकदाः ॥ ५॥

दिन कररुधिरौ प्रवेष काले गुरु भृगुजौ भवनस्य मध्ययातौ ।
रवि सुत शशिनौ विनिर्गमस्थौ शशि तनयः फलदस्तु सर्व कालम् ॥ ६॥

---

त्रयोविंशोऽध्यायः

अनिष्ट

लग्नात् पुत्र कलत्र भे शुभ पति प्राप्ते अथ वालोकिते चन्द्राद् वा यदि सम्पद् अस्ति हि तयोर्ज्ञेयोऽन्यथा संभवः ।

पाथोनोदयगे रवौ रवि सुतो मीन स्थितो दारहा पुत्र स्थान गतश्च पुत्र मरणं पुत्रोऽवनेर्यच्छति ॥ १॥

उग्र ग्रहैः सित चतुरस्र संस्थितैर्मध्य स्थिते भृगु तनये अथ वा उग्रयोः ।
सौम्य ग्रहैरसहित संनिरीक्षिते जाया वधो दहन निपात पाशजः ॥ २॥

लग्नाद् व्ययारि गतयोः शशि तिग्मरश्म्योः पत्न्या सहैक नयनस्य वदन्ति जन्म ।
द्यूनस्थयोर्नवम पञ्चम संस्थयोर्वा शुक्रार्कयोर्विकलदारम् उशन्ति जातम् ॥ ३॥

कोणोदये भृगु तनये अस्त चक्र संधौ वन्ध्या पतिर्यदि न सुतरृक्षम् इष्टयुक्तम् ।
पाप ग्रहैर्व्यय मद लग्नराशि संस्थैः क्षीणे शशिन्यसुत कलत्र जन्मधीस्थे ॥ ४॥

असित कुजयोर्वर्गे अस्तस्थे सिते तदवेक्षिते परयुवतिगस्तौ चेत् सेन्दु स्त्रिया सह पुंश्चलः ।
भृगुज शशिनोरस्ते अभार्यो नरो विसुतोऽपि वा परिणत तनू नृ स्त्र्योर्दृष्टौ शुभैः प्रमदा पती ॥ ५॥

वंश च्छेत्ता ख मद सुखगैश्चन्द्रदैत्येज्य पापैः शिल्पी त्र्यंशे शशि सुतयुते केन्द्र संस्थार्कि दृष्टे ।
दास्यां जातो दिति सुत गुरौ रिःफगे सौर भागे नीचोऽर्केन्द्वोर्मदन गतयोर्दृष्टयोः सूर्यजेन ॥ ६॥

पापालोकितयोः सितावनिजयोरस्तस्थयोर्वाध्यरुक् चन्द्रे कर्कट वृश्चिकांशक गते पापैर्युते गुह्यरुक् ।
श्वि त्री रिःफधनस्थयोरशुभयोश्चन्द्रोदये अस्ते रवौ चन्द्रे खे अवनिजे अस्तगे च विकलो यद्यर्कजो वेशिगः ॥ ७॥

अन्तः शशिन्यशुभयोर्मृगगे पतङ्गे श्वास क्षय प्लिहक विद्रधि गुल्म भाजः ।
शोषी परस्पर गृहांश गयोर्रवीन्द्वोः क्षेत्रे अथ वा युगपद् एकगयोः कृशो वा ॥ ८॥

चेन्द्रे अश्वि मध्य झष कर्कि मृगाज भागे कुष्ठी स मन्दरुधिरे तदवेक्षिते वा ।
यातैस्त्रिकोणम् अलि कर्कि वृषैर्मृगे च कुष्ठी च पाप सहितैरवलोकितैर्वा ॥ ९॥

निधनारि धन व्यय स्थितारवि चन्द्रारयमा यथा तथा ।
बलवद् ग्रहदोष कारणैर्मनुजानां जनयन्त्यनेत्रताम् ॥ १०॥

नवमाय तृतीयधी युता न च सौम्यैरशुभा निरीक्षिताः ।
नियमाच्छ्रवणोपघातदारद वैकृत्य कराश्च सप्तमे ॥ ११॥

उदयत्युडुपे सुरास्यगे स पिशाचोऽशुभयोस्त्रिकोणयोः ।
स उपप्लव मण्डले रवावुदयस्थे नयनापवर्जितः ॥ १२॥

संस्पृष्टः पवनेन मन्दगयुते द्यूने विलग्ने गुरौ स उन्मादोऽवनिजे स्थिते अस्त भवने जीवे विलग्नाश्रिते ।
तद्वत् सूर्य सुतोदये अवनि सुते धर्मात्मजद्यूनगे जातो वास सहस्त्ररश्मि तनये क्षीणे व्यये शीतगौ ॥ १३॥

राश्यंशपोष्ण कर शीत करामरेज्यैर्नीचाधिपांश गतैररि भागगैर्वा ।
एभ्योऽल्प मध्य बहुभिः क्रमशः प्रसूता ज्ञेयाः स्युरभ्युपगम क्रय गर्भदासाः ॥ १४॥

विकृतदशनः पापैर्दृष्टे वृषाज हयोदये खलतिरशुभ क्षेत्रे लग्ने हये वृष भे अपि वा ।
नवम सुतगे पापैर्दृष्टे रवावदृढेक्षणो दिन कर सुते नैक व्याधिः कुजे विकलः पुमान्
॥ १५॥

व्यय सुतधनधर्मगैरसौम्यैर्भवन स मान निबन्धनं विकल्प्यम् ।
भुज गनि गड पाशभृद् दृकाणैर्बलवद् असौम्य निरीक्षितैश्च तद्वत् ॥ १६॥

पुरुष वचनोऽपस्मारार्तः क्षयी च निशा पतौ सरवि तनये वक्रालोकं गते परिवेषगे
।
रवि यम कुजैः सौम्यादृष्टैर्नभः स्थलम् आश्रितैर्भृतक मनुजः पूर्वोद्दिष्टैर्वराधम मध्यमाः ॥ १७॥

---

## चतुर्विंशोऽध्यायः

### स्त्रीजातक

यद् यत् फलं नर भवे क्षमम् अङ्गनानां तत् तद्वदेत् पतिषु वा सकलं विधेयम् ।
तासां तु भर्तृ मरणं निधने वपुस्तु लग्नेन्दुगं सुभगतास्तमये पतिश्च ॥ १॥

युग्मेषु लग्न शशिनोः प्रकृति स्थिता स्त्री सच्छील भूषणयुता शुभदृष्टयोश्च ।
ओजस्थयोश्च मनुजाक्ति शीलयुक्ता पापा च पापयुतेक्षितयोर्गुणोना ॥ २॥

कन्याइवदुष्टा व्रजतीहदास्यं साध्वी स माया कुचरित्रयुक्ता ।
भूम्यात्मजर्क्षे क्रमशोऽंशकेषु वक्रार्कि जीवेन्दुज भार्गवानम् ॥ ३॥

दुष्टा पुनर्भूः स गुणा कलाज्ञा ख्याता गुणैश्चासुर पूजितर्क्षे ।
स्यात् कापटी क्लीब समा सती च बौधे गुणाढ्या प्रविकीर्णकामा ॥ ४॥

स्व च्छन्दा पति घातिनी बहु गुणा शिल्पिन्यसाध्वीन्दु भे ।

त्राचारा कुलटार्क भे नृप वधूः पुंश्चेष्टितागम्यगा ।
जैवेनैकगुणाल्परत्यतिगुणा विज्ञानयुक्ता सती ।
दासी नीचरतार्कि भे पति रतादुष्टा प्रजा स्वांशकैः ॥ ५॥

शशि लग्न समायुक्तैः फलं त्रिंशांशकैरिदम् ।
बलाबल विकल्पेन तयोरुक्तं विचिन्तयेत् ॥ ६॥

दृक् संस्थावसित सितौ परस्परांशे शौक्रे वा यदि घटराशि संभवोऽंशः ।
स्त्रीभिः स्त्री मदन विषानल प्रदीप्तं संशान्तिं नयति नराकृति स्थिताभिः ॥ ७॥

शून्ये कापुरुषो बले अस्त भवने सौम्य ग्रहावीक्षिते क्लीवोऽस्ते बुध मन्दयोश्चर गृहे नित्यं प्रवासान्वितः ।
उत्सृष्टारविणा कुजेन विधवा वाल्ये अस्तराशि स्थिते कन्याइवाशुभ वीक्षिते अर्क तनये द्यूने जरां गच्छति ॥ ८॥

आग्नेयैर्विधवास्तराशि सहितैर्मिश्रैः पुनर्भूर्भवेत् क्रूरे हीन बले अस्तगे स्व पतिना सौम्येक्षिते प्रोज्झिता ।
अन्योन्यांशगयोः सितावनिजयोरन्य प्रसक्ताङ्गना द्यूने वा यदि शीतरश्मि सहितौ भर्तुस्तदानुज्ञया ॥ ९॥

सौरारऋक्षे लग्नगे सेन्दु शुक्रे मत्रा सार्द्धं बन्धकी पापदृष्टे ।
कौजे अस्तांशे सौरिणा व्याधि योनिश्चारु श्रोणी वल्लभा सद् ग्रहांशे ॥ १०॥

वृद्धो मूर्खः सूर्यजऋक्षे अंशके वा स्त्री लोलः स्यात् क्रोधनश्चावनेये ।
शौक्रे कान्तोऽतीव सौभाग्ययुक्तो विद्वान् भर्ता नैपुण ज्ञश्च बौधे ॥ ११॥

मदन वश गतो मृदुश्च चान्द्रे त्रि दश गुरौ गुणवान् जितेन्द्रियश्च ।
अतिमृदु रति कर्म कृच्च सौर्ये भवति गृहे अस्तमय स्थिते अंशके वा ॥ १२॥

ईर्ष्यान्विता सुख परा शशि शुक्र लग्ने ज्ञेन्द्वोः कलासु निपुणा सुखिता गुणाढ्या ।
शुक्र ज्ञयोस्तु रुचिरा सुभगा कलाज्ञा त्रिष्वप्यनेक वसु सौख्य गुणा शुभेषु ॥ १३॥

क्रूरे अष्टमे विधवता निधनेश्वरोऽंशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा ।
सत् स्वर्थगेषु मरणं स्वयम् एव तस्याः कन्यालिगो हरिषु चाल्प सुतत्वम् इन्दौ ॥ १४॥

सौरे मध्य बले बलेनरहितैः शीतांशु शुक्रेन्दुजैः शेषैर्वीर्य समन्वितैः परुषिणी यद्योजराश्युद्गमः ।

जीवार स्फुजि दैन्दवेषु बलिषु प्राग् लग्नराशौ समे विख्याता भुवि नैक शास्त्र निपुणा स्त्री ब्रह्म वादिन्यपि ॥ १५॥

पापे अस्ते नवम गत ग्रहस्य तुल्यां प्रव्रज्यां युवतिरुपैत्यसंशयेन ।
उद्वाहे वरण विधौ प्रदान काले चिन्तायाम् अपि सकलं विधेयम् एतत् ॥ १६॥

पंचविंशोऽध्यायः

नैर्याणिक

मृत्युर्मृत्यु गृहेक्षणेन बलिभिस्तद्धातु कोपोद्भवस्तत् संयुक्त भ गात्रजो बहु भवो वीर्यान्वितैर्भूरिभिः ।
अग्न्यंब्वायुधजो ज्वरामय कृतस्तृट् क्षुत् कृतश्चाष्टमे सूर्याद्यैर्निधने चरादिषु पर स्वाध्व प्रदेशेष्विति ॥ १॥

शैलाग्राभिहतस्य सूर्य कुजयोर्मृत्युः ख बन्धुस्थयोः कूपे मन्द शशाङ्क भूमि तनयैर्बन्ध्वस्त कर्म स्थितैः ।
कन्यायां स्व जनाद् धिमोष्ण करयोः पाप ग्रहैर्दृष्टयोः स्यातां यद्युभयोदये अर्क शशिनौ तोये तदा मज्जितः ॥ २॥

मन्दे कर्कटगे जलोदर कृतो मृत्युर्मृगाङ्के मृगे शस्त्राग्नि प्रभवः शशिन्यशुभयोर्मध्ये कुज ऋक्षे स्थिते ।
कन्यायां रुधिरोत्थ शोष जनितस्तद्वत् स्थिते शीतगौ सौरऋक्षे यदि तद्वद् एव हिमगौ रज्ज्वग्नि पातैः कृतः ॥ ३॥

बन्धाद् धी नवमस्तयोरशुभयोः सौम्य ग्रहाद् दृष्टयोर्द्रेष्काणैश्च स पाश सर्प निगडैश्छिद्र स्थितैर्बन्धतः ।
कन्यायाम् अशुभान्विते अस्तमयगे चन्द्रे सिते मेषगे सूर्ये लग्न गते च विद्धि मरणं स्त्री हेतुकं मन्दिरे ॥ ४॥

शूलोद्भिन्न तनुः सुखे अवनि सुते सूर्ये अपि वा खे यमे स प्रक्षीण हिमांशुभिश्च युगपत् पापैस्त्रिकोणाद्यगैः ।
बन्धुस्थे चरवौ वियत्यवनिजे क्षीणेन्दु संवीक्षिते काष्ठेनाभिहतः प्रयाति मरणं सूर्यात्मजेनेक्षिते ॥ ५॥

रन्ध्रास्पदाङ्ग हिबुकैर्लगुडाहताङ्गः प्रक्षीण चन्द्ररुधिरार्कि दिनेशयुक्तैः ।
तैरेव कर्म नवमोदय पुत्र संस्थैर्धूमाग्नि बन्धन शरीर निकुट्टनान्तः ॥ ६॥

बन्ध्वस्त कर्म सहितैः कुज सूर्य मन्दैर्निर्याणम् आयुध शिखि क्षिति पाल कोपात् ।
सौरेन्दु भूमि तनयैः स्व सुखास्पदस्थैर्ज्ञेयः क्षत कृमि कृतश्च शरीर घातः ॥ ७॥

खस्थे अर्के अवनिजे रसातल गते यान प्रपातद् वधो यन्त्रोत्पीडनजः कुजे अस्तमयगे सौरेन्दुनाभ्युद्गमे ।
विण् मध्ये रुधिरार्कि शीत किरणैर्जूकाज सौरत्र्यृक्षगैर्याते वा गलितेन्दु सूर्यरुधिरैर्व्योमास्त बन्ध्वाह्वयान् ॥ ८॥

वीर्यान्वित वक्र वीक्षिते क्षीणेन्दौ निधन स्थिते अर्कजे ।
गुह्योद्भवरोग पीडया मृत्युः स्यात् कृमि शस्त्रदाहजः ॥ ९॥

अस्ते रवौ सरुधिरे निधने अर्क पुत्रे क्षीणे रसातल गते हिमगौ खगान्तः ।
लग्नात्मजाष्टम तपःस्विन भौम मन्द चन्द्रैस्तु शैल शिखराशनि कुड्य पातैः ॥ १०॥

द्वाविंशः कथितस्तु कारणं द्रेष्काणो निधनस्य सूरिभिः ।
तस्याधिपतिर्भवोऽपि वा निर्याणं स्व गुणैः प्रयच्छति ॥ ११॥

होरा नवांशकपयुक्त स मान भूमौ योगेक्षणादिभिरतः परिकल्प्यम् एतत् ।
मोहस्तु मृत्यु समये अनुदितांश तुल्यः स्वेशेक्षिते द्वि गुणितस्त्रिगुणः शुभैश्च ॥ १२॥

दहन जल विमिश्रैर्भस्म संक्लेद शोषैर्निधन भवन संस्थैर्व्याल वर्गैर्विडन्तः ।
इति शव परिणामश्चिन्तनीयो यथोक्तः पृथुवि रचित शास्त्राद् गत्यनूकादि चिन्त्यम् ॥ १३॥

गुरुरुडु पति शुक्रौ सूर्य भौमौ यम ज्ञौ विबुध पितृ तिरश्चो नारकीयांश्च कुर्युः ।
दिन कर शशि वीर्याधिष्ठितात् त्र्यंश नाथात् प्रवर सम निकृष्टास्तुङ्ग ह्रसाद् अनूके ॥ १४॥

गतिरपि रिपु रन्ध्र त्र्यंशपोऽस्तस्थितो वा गुरुरथरिपु केन्द्र च्छिद्रगः स्वोच्च संस्थः ।
उदयति भवने अन्त्ये सौम्य भागे च मोक्षो भवति यदि बलेन प्रोज्झितास्तत्र शेषाः ॥ १५॥

षड्विंशोऽध्यायः

नष्टजातक

आधान जन्मापरिबोध काले सम्पृच्छतो जन्म वदेद्द् विलग्नात् ।
पूर्वापरार्धे भवनस्य विन्द्याद् भानावुदग् दक्षिणगे प्रसूतिम् ॥ १॥

लग्न त्रिकोणेषु गुरुस्त्रि भागैर्विकल्प्य वर्षाणि वयोऽनुमानात् ।
ग्रीष्मोऽर्के लग्ने कथितास्तु शेषैरन्यायनर्तावृतुरर्क चारात् ॥ २॥

चन्द्र ज्ञ जीवाः परिवर्तनीयाः शुक्रार मन्दैरयने विलोमे ।
द्रेष्काण भागे प्रथमे तु पूर्वो मासोऽनुपाताच्च तिथिर्विकल्प्यः ॥ ३॥

अत्रापि होरा पटवो द्विजेन्द्राः सूर्यांश तुल्यां तिथिम् उद्दिशन्ति ।
रात्रि द्यु संज्ञेषु विलोम जन्म भागैश्च वेलाः क्रमशो विकल्प्याः ॥ ४॥

के चिच्छशाङ्काध्युषितान् नवांशाच्छुक्लान्त संज्ञं कथयन्ति मासम् ।
लग्न त्रिकोणोत्तम वीर्ययुक्तं सम्प्रोच्यते अङ्गाल भनादिभिर्वा ॥ ५॥

यावान् गतः शीत करो विलग्नाच्चन्द्राद् वदेत् तावति जन्मराशिः ।
मीनोदये मीनयुगं प्रदिष्टं भक्ष्याहृताकाररुतैश्च चिन्त्यम् ॥ ६॥

होरा नवांश प्रतिमं विलग्नं लग्नाद् रविर्यावति च दृकाणे ।
तस्माद् वदेत् तावति वा विलग्नं प्रष्टुः प्रसूताविति शास्त्रम् आह ॥ ७॥

जन्मादिशेल् लग्नगे वीर्यगे वा छायाङ्गुल घ्नेर्कहते अवशिष्टम् ।
आसीन सुप्तोत्थित तिष्ठताभं जाया सुखाज्ञोदयगं प्रदिष्टम् ॥ ८॥

गो सिंहौ जितुमाष्टमौ क्रिय तुले कन्या मृगौ च क्रमात् संवर्ग्यो दशकाष्ट सप्त विषयैः शेषाः स्व संख्या गुणाः ।
जीवारास्फुजि दैन्दवाः प्रथमवच्छेषा ग्रहाः सौम्यवद् राशीनं नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गणा ॥ ९॥

सप्ताहतं त्रि घन भाजित शेषम् ऋक्षं दत्त्वाथ वा नव विशोध्य न वाथ वास्मात् ।
एवं कलत्र सहजात्मज शत्रु भेभ्यः प्रष्टुर्वदेद्द उदयराशि वशेन तेषाम् ॥ १०॥

वर्षऋतु मास तिथयो द्यु निशं ह्युडूनि वेलोदये ऋक्ष नव भाग विकल्पनाः स्युः ।
भूयो दशादि गुणिताः स्व विकल्प भक्ता वर्षादयो नवकदान विशोधनाभ्याम् ॥ ११॥

विज्ञेयादशकेष्वब्दाऋतु मासास्तथैव च ।
अष्टकेष्वपि मासाद् अर्धास्तिथयश्च तथा स्मृताः ॥ १२॥

दिवारात्रि प्रसूतिं च नक्षत्रानयनं तथा ।

सप्तकष्वपि वर्गेषु नित्यम् एवोपलक्षयेत् ॥ १३॥

वेलाम् अथ विलग्नं च होराम् अंशकम् एव च ।
पञ्चकेषु विजानीयान् नष्ट जातक सिद्धये ॥ १४॥

संस्कार नाम मात्राद्वि गुणा छायाङ्गुलैः समायुक्ताः ।
शेषं त्रि नवक भक्तान् नक्षत्रं तद्धनिष्टः आदि ॥ १५॥

द्वि त्रि चतुर्दशदश तिथि सप्त त्रि गुणा नवाष्ट चेन्द्राद्याः ।
पञ्चदशघ्नास्तद्दिङ् मुखान्विता भधनिष्ठादि ॥ १६॥

इति नष्ट जातकम् इदं बहु प्रकारं मया विनिर्दिष्टम् ।
ग्राह्यम् अतः सच्छिष्यैः परीक्ष्ययन्ताद् यथा भवति ॥ १७॥

---

## सप्तविंशोऽध्यायः

### द्रेष्काण स्वरूप

कट्यां सित वस्त्र वेष्टितः कृष्णः शक्तेवाभिरक्षितुम् ।
रौद्रः परशुं समुद्यतं धत्ते रक्त विलोचनः पुमान् ॥ १॥

रक्तम् अम्बरा भूषण भक्ष्य चिन्ता कुम्भाकृतिर्वाजि मुखी तृषार्ता ।
एकेन पादेन च मेष मध्ये द्रेष्काणरूपं यवनोपदिष्टम् ॥ २॥

क्रूरः कलाज्ञः कपिलः क्रियार्थी भग्न व्रतोऽभ्युद्य तदण्ड हस्तः ।
रक्तानि वस्त्राणि बिभर्ति चण्डो मेषे तृतीयः कथितस्त्रि भागः ॥ ३॥

कुञ्चित लून कचा घटदेहादग्ध पटा तृषिताशन चित्ता ।
आभरणान्यभिवाञ्छति नारी रूपम् इदं वृष भे प्रथमस्य ॥ ४॥

क्षेत्रधान्य गृहधेनु कलाज्ञो लाङ्गले स शकटे कुशलश्च ।
स्कन्धम् उद्वहति गो पति तुल्यं क्षुत् परोऽज वदनो मल वासा ॥ ५॥

द्विप सम कायः पाण्डुरदंष्ट्रः शरभ समाङ्घ्रिः पिङ्गल मूर्तिः ।
अवि मृग लोभ व्याकुल चित्तो वृषभ वनस्य प्रान्त गतोऽयम् ॥ ६॥

सूच्याश्रयं समभिवाञ्छति कर्म नारी रूपान्विताभरण कार्य कृतादरा च ।
हीन प्रजोच्छ्रित भुजऋतु मती त्रि भागम् आद्यं तृतीय भवनस्य वदन्ति तज्ज्ञाः ॥
७॥

उद्यान संस्थः कवची धनुष्माञ् छूरोऽस्त्रधारी गरुडाननाश्च ।

क्रीडात्मजालंकरणार्थ चिन्तां करोति मध्ये मिथुनस्यराशेः ॥ ८॥

भूषितो वरुणवद् बहु रत्नो बद्ध तूण कवचः सधनुष्कः ।
नृत्त वादित कलासु च विद्वान् काव्य कृन् मिथुनराश्यवसाने ॥ ९॥

पत्र मूल फल भृद् द्विप कायः कानने मलयगः शरभाङ्घ्रिः ।
क्रोड तुल्य वदनो हय कण्ठः कर्कटे प्रथमरूपम् उशन्ति ॥ १०॥

पद्मार्चिता मूर्धनि भोगि युक्ता स्त्री कर्क शारण्य गता विरौति ।
शाखां पलाशस्य समाश्रिता च मध्ये स्थिता कर्कटकस्यराशेः ॥ ११॥

भार्याभरणार्थम् अर्णवं नौस्थो गच्छति सर्प वेष्टितः ।
हैमैश्च युतो विभूषणैश्चिपिटास्याङ्त्य गतश्च कर्कटे ॥ १२॥

शाल्मलेरुपरि गृध्र जम्बुकौ श्वा नरश्च मलिनाम्बरान्वितः ।
रौति मातृ पित्रिविपर्योजितः सिंहरूपम् इदम् आद्यम् उच्यते ॥ १३॥

हयाकृतिः पाण्डुर माल्य शेखरो बिभर्ति कृष्णाजिन कम्बलं नरः ।
दुरासदः सिंहेवात्त कार्मुको नताग्र नासो मृगराज मध्यमः ॥ १४॥

ऋक्षाननो वानर तुल्य चेष्टो बिभर्ति दण्डं फलम् आमिषं च ।
कूर्ची मनुष्यः कुटिलैश्च केशैर्मृगेश्वरस्यान्त्य गतस्त्रि भागः ॥ १५॥

पुष्प प्रपूर्णेन घटेन कन्या मल प्रदिग्धाम्बर संवृताङ्गी ।
वस्त्रार्थ संयोगम् अभीष्टमाना गुरोः कुलं वाञ्छति कन्याकाद्यः ॥ १६॥

पुरुषः प्रगृहीत लेखनिः श्यामो वस्त्र शिरा व्यायय कृत् ।
विपुलं च बिभर्ति कार्मुकं रोम व्याप्त तनुश्च मध्यमः ॥ १७॥

गौरी सुधौताग्रदुकूल गुप्ता समुच्छ्रिता कुम्भ कटच्छुहस्ता ।
देवालयं स्त्री प्रयता प्रवृत्ता वदन्ति कन्यान्त्य गतस्त्रि भागः ॥ १८॥

वीथ्यन्तरापण गतः पुरुषस्तुलावान् उन्मान मान कुशलः प्रतिमान हस्तः ।
भाण्डं विचिन्तयति तस्य च मूल्यम् एतद् रूपं वदन्ति यवनाः प्रथमं तुलायाः ॥ १९॥

कलशं परिगृह्य विनिष्पतितुं समभीप्सति गृध्र मुखः पुरुषः ।
क्षुधितस्तृषितश्च कलत्र सुतान् मनसेति तुलाधर मध्य गतः ॥ २०॥

विभीषयंस्तिष्ठति रत्न चित्रितो वने मृगान् काञ्चन तूण वर्म भृत् ।
फलामिषं वानररूपभृन् नरस्तुला वसाने यवनैरुदाहृतः ॥ २१॥

वस्त्रैर्विहीनाभरणैश्च नारी महा समुद्रात् समुपैति कूलम् ।
स्थान च्युता सर्प निबद्ध पादा मनोरमा वृश्चिकराशि पूर्वः ॥ २२॥

स्थान सुखान्यभिवाञ्छति नारी भर्तृतु कृते भुजगावृतदेहा ।
कच्छप कुम्भ स मान शरीरा वृश्चिक मध्यमरूपम् उशन्ति ॥ २३॥

पृथुल चिपिट कूर्म तुल्य वक्रः श्व मृग वराह सृगाल भीषकारी ।
अवति च मलयाकर प्रदेशं मृग पतिरन्त्य गतस्य वृश्चिकस्य ॥ २४॥

मनुष्य वक्त्रोऽश्व स मान कायो धनुर्विगृह्यायतम् आश्रमस्थः ।
क्रतूपयोज्यानि तपस्विनश्चररक्षाद्यो धनुषस्त्रि भागः ॥ २५॥

मनोरमा चम्पक हेम वर्णा भद्रासने तिष्ठति मध्यरूपा ।
समुद्ररत्नानि विघट्टयन्ती मध्य त्रि भागो धनुषः प्रदिष्टः ॥ २६॥

कूर्ची नरो हाटक चम्पकाभो वरासने दण्डधरो निषण्णः ।
कौशेयकान्युद्वहते अजिनं च तृतीयरूपं नवमस्यराशेः ॥ २७॥

रोम चितो मकरोपमदंष्ट्रः सूकरकायस मान शरीरः ।
योक्त्रक जालक बन्धनधारी रौद्र मुखो मकर प्रथमस्तु ॥ २८॥

कलास्वभिज्ञाब्जदलायताक्षी श्यामा विचित्राणि च मार्गमाणा ।
विभूषणालंकृत लोह कर्णा योषा प्रदिष्टा मकरस्य मध्ये ॥ २९॥

किन्नरोपम तनुः स कम्बलस्तूण चाप कवचैः समन्वितः ।
कुम्भम् उद्वहति रत्न चित्रितं स्कन्धगं मकरराशि पश्चिमः ॥ ३०॥ रथोद्धता)
स्नेह मद्य जल भोजनागम व्याकुली कृत मनाः स कम्बलः ।
कोश कार वसनोऽजिनान्वितो गृध्र तुल्य वदनो घटादिगः ॥ ३१॥

दग्धे शकटे स शाल्मले लोहान्याहरते अङ्गना वने ।
मलिनेन पटेन संव्ता भाण्डैर्मूर्ध्नि गतैश्च मध्यमः ॥ ३२॥

श्यामः सरोम श्रवणः किरीटी त्वक् पत्र निर्यास फलैर्बिभर्ति ।
भाण्डानि लोह व्यतिमिश्रितानि सञ्चारयन्त्यन्त गतो घटस्य ॥ ३३॥

स्रुग् भाण्ड मुक्तामणि शङ्ख मिस्त्रैर्व्याक्षिप्त हस्तः स विभूषणश्च ।
भार्या विभूषार्थम् अपां निधानं नावा प्लवत्यादि गतो झषस्य ॥ ३४॥

अत्युच्छ्रितध्वज पताकम् उपैति पोतं कूलं प्रयाति जलधेः परिवारयुक्ता ।

वर्णेन चम्पक मुखी प्रमदा त्रि भागो मीनस्य चैष कथितो मुनिभिर्द्वितीयः ॥ ३५॥

श्वभ्रान्तिके सर्प निवेष्टिताङ्गा वस्त्रैर्विहीनः पुरुषस्त्वटव्याम् ।
चौरानल व्याकुलितान्तरात्मा विक्रोशते अन्त्योपगतो झषस्य ॥ ३६॥

---

अष्टाविंशोऽध्यायः

उपसंहार

राशि प्रभेदो ग्रहयोनि भेदो वियोनि जन्माथ निषेक कालः ।
जन्माथ सद्यो मरणं तथायुर्दशा विपाकोऽष्टक वर्ग संज्ञः ॥ १॥

कर्माजीवो राजयोगाः खयोगाश्चान्द्रा योगाद् विग्रहाद्याश्च योगाः ।
प्रव्रजाथो राशि शीलानि दृिष्टर्भावस्तस्माद् आश्रयोऽथ प्रकीर्णः ॥ २॥

नेष्टा योगा जातकं कामिनीनां निर्याणं स्यान् नेष्ट जन्मदृकाणः ।
अध्यायानां विंशतिः पञ्च युक्ता जन्मन्येतद् यात्रिकं चाभिधास्ये ॥ ३॥

प्रश्नास्तिथिर्भं दिवसः क्षणश्च चन्द्रो विलग्नं त्वथ लग्न भेदः ।
शुद्धिर्ग्रहाणाम् अथ चाप वादो विमिश्रकाख्यं तनु वेपनं च ॥ ४॥

अतः परं गुह्यक पूजनं स्यात् स्वप्नं ततः स्नान विधिः प्रदिष्टः ।
यज्ञो ग्रहाणाम् अथ निर्गमश्च क्रमाच्च दिष्टः शकुनोपदेशः ॥ ५॥

विवाह कालः करणं ग्रहाणां प्रोक्तं पृथक् तद्विपुलाथ शाखा ।
स्कन्धैस्त्रिभिर्ज्यौतिष संग्रहोऽयं मया कृतो दैव विदां हिताय ॥ ६॥

पृथु विरचितम् अन्यैः शास्त्रम् एतत् समस्तं तदनु लघु मयेदं तत् प्रदेशार्थम् एव ।
कृतम् इह हि समर्थं धी विषाणामत्वे ममयदि हयद् उक्तं सज् जनैः क्षम्यतां तत् ॥ ७॥

ग्रन्थस्यया प्रचरतोऽस्य विनाशम् एति केख्व्यात् बहु श्रित मुखाधिगम क्रमेण ।
यद् वा मया कुकृतम् अल्पम् इहाकृतं वा कार्यं तदत्र विदुषा परिहृत्यरागम् ॥ ८॥

आदित्यदास तनयस्तदवाप्त बोधः कापित्थके सवितृ लब्ध वर प्रसादः ।
आवन्तिको मुनि मतान्यवलोक्य सम्यग् घोरां वराहमिहिरो रुचिरां चकार ॥ ९॥

दिन कर मुनि गुरु चरण प्रणिपात कृत प्रसाद मतिनेदम् ।
शास्त्रम् उपसंगृहीतं नमोऽस्तु पूर्व प्रनेतृभ्यः ॥ १०॥

Encoded by Mizue Sugita December12, 1994

Avilable at ftp://ccftp.kyoto-su.ac.jp/pub/doc/sanskrit/jyotisa/bj.jyt

Converted to Itrans for Devanagari display by Radu Canahai clradu@yahoo.com

The table of Contents adhyAya and verse numbers

